# गुरुमर्मप्रकाशकपाटकोद्धारः

## रसगङ्गाधरमर्मप्रकाशाक्षेपपरिहाररूपः

सपरिशिष्टः

पदवाक्यप्रमाण-परिनिष्ठित-

श्री पं० हरिनाथ-शास्त्रिनिबद्धः

ग्रन्थकर्त्रा प्रकाशितः



१) रुप्यकम् ।



प्राप्तिस्थानम्—३३।३३ चौकवाड़ी-महल्ला नीलकंठ

बनारस सिटी ।

# भूमिका

मान्यान् विवेकनिपुणान् विहिताञ्जलिः सन्भूयो निवेद्य विनयं विनिवेदयामि।
मान्याः कृतोपकृतयो गुरवः सदैव पूज्याः कदापि विदुषां न विहर्गणीयाः॥

सम्प्रति निर्णयसागरमुद्रितनवरसगङ्गाधरपुस्तकस्य बृहदाकारां भूमिकां तन्नवीनां सरलां व्याख्याञ्चालोक्य विषण्णेन मया गुरुमर्मप्रकाशकण्टकोद्धारनामा लघुनिवन्धो निवद्धः। तत्र नागेशे कृता मिथ्याक्षेपाः परिहृताः। नागेशस्य वैदुष्यविषये विदुषां समक्षं किं निवेद्यं निष्फलत्वात् अविदुषामपि तथैव। तथापि अत्र भूमिकायां नवटीकायाञ्च पाणिनिमारभ्या-द्यावधिपर्य्यन्तं ये विद्वांसस्ते सर्वे आक्षिप्ताः। नागेशस्तु गालीधाराभिस्स्व-योग्यतां परिचाययता लोकोत्तरवैदुष्याभिमानवता सरलाजनकेन तिरस्कृ-

क्षेपं परिजिहीर्षता मर्मप्रकाशकण्टकोद्धारः

। अन्येषामप्याक्षेपाः परिहृताः। आक्षे-

स्तत्पृष्ठपोषकस्य च पक्षपातपरिचयश्च

ये म० म० चतुर्वेदस्योपालम्भश्च परि-

षितान् रसगङ्गाधरांशान् मनागप्यस्पृष्ट्वैव

आकृष्टः। यदि एषां वैदुष्याभिनिवेशो

षितांशलवोऽपि उद्धर्तव्यः। नहि रण्डा.

नाथग्रन्थस्य वा सदोषता परिह्रियेत।

त्वाक्रोशेन। नागेशेन स्वग्रन्थे सत्य-

यत्र यत्र प्राचीनविद्वांस आक्षिप्ताः

ग्रन्थो योजितः सच न निन्दा। तत्र

निवध्नन्ति स्वस्वनिवन्धेषु तत्र

भवेत्। म ाऽपि मत्यसंरक्षणायैव

त्रे द्रष्टव्यः

# भूमिका

मान्यान् विवेकनिपुणान् विहिताञ्जलिः सन्भूयो निवेद्य विनयं विनिवेदयामि ।
मान्याः कृतोपकृतयो गुरवः सदैव पूज्याः कदापि विदुषां न विहर्गणीयाः ॥

सम्प्रति निर्णयसागरमुद्रितनवरसशङ्गाधरपुस्तकस्य बृहदाकारां भूमिकां तत्नवीनां सरलां व्याख्याञ्चालोक्य विषण्णेन मया गुरुमर्मप्रकाशकण्टकोद्धारनामा लघुनिबन्धो निबद्धः। तत्र नागेशे कृता मिथ्याक्षेपाः परिहृताः। नागेशस्य वैदुष्यविषये विदुषां समक्षं किं निवेद्यं निष्फलत्वात् अविदुषामपि तथैव। तथापि अत्र भूमिकायां नवटीकायाञ्च पाणिनिमारभ्याद्यावधिपर्य्यन्तं ये विद्वांसस्ते सर्वे आक्षिप्ताः। नागेशस्तु गालोद्गाराभिस्स्वयोग्यतां परिचाययता लोकोत्तरवैदुष्याभिमानवता सरलाजनकेन तिरस्कृ[illegible] क्षेपं परिजिहीर्षता मर्मप्रकाशकण्टकोद्धारः [illegible] । अन्येषामप्याक्षेपाः परिहृताः। आक्षे[illegible]स्तत्पृष्ठपोषकस्य च पक्षपातपरिचयश्च [illegible]ये म० म० चतुर्वेदस्योपालम्भश्च परि[illegible]षितान् रसगङ्गाधरांशान् मनागप्यस्पृष्ट्वैव [illegible]क्रुष्टः। यदि एषां वैदुष्याभिनिवेशो [illegible]षितांशलवोऽपि उद्धृतव्यः। नहि रण्डा[illegible] [illegible]नाथग्रन्थस्य वा सदोषता परिहियेत। [illegible]स्वाक्रोशेन । नागेशेन स्वग्रन्थे सत्य[illegible] [illegible]त्र यत्र प्राचीनविद्वांस आक्षिप्ताः [illegible]ग्रन्थो योजितः सच न निन्दा। तत्र [illegible] निबध्नन्ति स्वस्वनिबन्धेषु तत्र [illegible] भवेत्। म [illegible]ऽपि मत्यसंग्रह्य[illegible]णाथैव [illegible]त्रे द्रष्टव्यः

गुरुमर्मप्रकाशकण्टकोद्धारः

# कवितार्किकशिरोमणि-

## श्रीहरिनाथशास्त्रिणा निबद्धः

रुचिरमयूरपिच्छवरभूषणवंशीवरकरशाली ।
पीताम्बरनिवसनवृन्दावनश्रीगिरिधरवनमाली ॥
गो गोपीजन लोचन रोचन दीन दया विस्तारी ।
वसतु सदा मम मानसकुञ्जे राधारमणविहारी ॥१॥
य एष कुरुते मनो विपदि गौरवीणां गिराम् ।
स वामन इवाम्बरे हरिणलाञ्छनं वाञ्छति ॥
लिलङ्घिषति सिंहिकारमणकेशरं फेरुवत् ।
पतङ्ग इव पावकं नृहरिमावकं वाञ्छति ॥२॥
तापं त्यजन्तु गुरुमर्मणि भक्तिभाजो
योऽलर्कदूषितवचःपरितप्यमानाः ॥
सिद्धान्तखड्गमवगूर्य्य कलङ्करङ्कं
काङ्कालिकाचरणयोर्बलिमाहरामि ॥३॥
गौर्गौः कामदुधा सम्यक् सुप्रयुक्ता स्मृता बुधैः ।
दुष्प्रयुक्ता पुनर्गोत्वं वक्तुरेवहि शंसति ।

अयि सुधियः कर्णे कुर्वन्तु सुधीजनविधेयस्य किमपि निगद्य मानम्। सर्वोऽपि जनः निसर्गतः प्रतिष्ठां कामयते तदर्थं यतते च तदुचितमेव। परन्तु इदानीं जगति अयोग्यो जनो गुरूनाधिक्षिप्यापि प्रतिष्ठां कामयमानो न शङ्कते न लज्जते च अस्यैवोदाहरणभूतोयं सरलाप्रबन्ध इति विदाङ्कुर्वन्तु सुधियः।

रसगङ्गाधरस्य जगन्नाथनिबद्धस्य जगद्गुरुणा श्रीनागेशभट्टेन गुरुमर्मप्रकाशनाम्नी टीका व्यरचि या काश्यां मोहमय्यां च मुद्रिताऽस्ति। तस्यैव ग्रन्थस्येदानीमपरा सरलाभिधाना टीका केनापि निबद्धा या गुरुमर्मप्रकाशेन सहैव निर्णयसागरमुद्राशालातः प्रकाशिता। तस्यां सरलायां प्रतिस्थलं प्रतिपत्रं श्रीनागेशस्य नामग्राहं निन्दा व्याहृता आक्रोशवाक् च। यथा नास्ति नागेशो साहित्यमर्मज्ञोऽलङ्कारमर्मज्ञश्चेति नागेशस्य कोपज्ञानमपि कलङ्कितमितिहासपुराणयोर्ज्ञानमपि तथैव किं बहुना नागेशस्य व्याकरणव्युत्पत्तिरपि सुधियामुपहासायैवेति। किं बहुना नागेशः विवादातिरिक्तं न किञ्चित्सम्यगवच्छतीति यावत्। इति सर्वं तत्र तत्रास्मिन्निबन्धे उदाहरिष्यामि। तस्य ग्रन्थस्य आरम्भे एव महती भूमिका ग्रन्थाकारा सरलाजनकेन निबद्धा यस्यां बहुभिः प्रकारैः प्राचीना अर्वाचीनाश्च निबन्धकृतः पाणिनिमारभ्य नागेशपर्य्यन्तं गालीभिः सत्कृताः, आधुनिका विद्वांसश्च बहुधा आक्षिप्ताः। तस्यारम्भे एव गिरिधरशर्मचतुर्वेदेन मिथ्यैव भ्रान्त्या वा श्लाघापदं नीतेनानेन सरलाकृता सर्वेऽपि विद्वांसः अलर्कसमतां श्वमुखेनैव नीताः। तद्यथा भूमिकायां ३२ तमे पृष्ठे—

विषमविवादोदर्कग्रस्तास्तर्कमात्रपराः।
केवलमलर्कसमाः साम्प्रतं प्रतीयन्ते इति॥

अहो धार्ष्ट्यमस्य लघुवदनदीर्घरावस्य इदानीमपि जनाः यान् विदुषो देववदर्चयन्ति तान् स सभाजयति गालीभिरिदं कुलोचितमेवास्य । अयं ग्रन्थकृत् इहजन्मनि रसगङ्गाधराध्ययनेऽपि नाधिकारी किं पुनस्तट्टीकाकरणे । अस्य सन्धिज्ञानं लिङ्गज्ञानमपि नास्ति शब्दरूपावलीमपि न जानाति व्याकरणज्ञानं तु दूरादेवामुं परिहरति इदं सर्वमस्य वैदुष्यज्ञापकमत्र निबन्धे तत्र तत्र नागेशाक्षेपपरिहारावसरे समूलं निवेदयितास्मि धैर्य्यमवलम्ब्य तिष्ठन्तु सुधियः ।

यद्यपि अनुहुंकुरुते घनध्वनिं नतु गोमायुरुतानि केशरीतिवचनेनास्योपेक्षैव युक्ता तथापि मन्दमतीनामस्य ग्रन्थविषये योग्यताविषये नागेशादीनां चायोग्यतायां च वर्धमानां सम्भावनामुन्मूलयितुमेव मे प्रयत्नः । आक्षेपपरिहारस्तु निमित्तमात्रमिति ।

परिशीलयन्तु सुधियः निमीलिताक्षाणां परदर्शितदर्शिनाम् नागेशस्य निन्दनम् । निर्णयसागरमुद्राशालातः १९३९ तमे ख्रिस्तवर्षे रसगङ्गाधरस्य नवीनं संस्करणं सरलासहितमभूत् । तत्र सरलाकृता नागेशे बहवो दोषा आरोपितास्ते यथावसरमनूद्य परिहरिष्यन्ते गुरुमर्मप्रकाशकण्टकोद्धारनामके मन्निबन्धे । इदानीं तावत् सरलासौष्ठवे गिरिधरशर्मचतुर्वेदानां षड्भिः पृष्ठैः ससमालोचना सम्मतिरपि मुद्रिता तामेव तावत्समालोचयामि । तत्र तावन्महामहोपाध्यायोद्गाराः—"यद्यपि यादृशी विस्तृता टीका सर्वविधविवेचनपूर्णस्य ग्रन्थस्यास्यापेक्ष्यते न तथाविधेयं संक्षिप्तत्वात् । अथापि ग्रन्थग्रन्थिभेदने विदुषां साहाय्यमाचरिष्यतीति मे विश्वासः ( मिथ्यैव विश्वास इति तत्र तत्र अत्र प्रबन्धे निवेदयितास्मि अवहितो भव ) तदेवंविधविद्वज्जनोपकारकविद्वदुचितकार्य्यसंपादने ( अत्र मद्विधविद्वज्जनोपकारकेतिवाच्यम् ) लब्धसाफल्यं पण्डितप्रकाण्डं भट्टमहाशयमहं धन्यवादैरभिनन्द-

यामि । सफलयन्तु चास्य परिश्रमं दृष्टिपातेन विद्वांस इत्याशासे गिरिधर्मशर्मा चतुर्वेदी ( अत्र महामहोपाध्यायाद्यनेकविरुदालङ्कृतो भारतसुप्रसिद्धः सनातनधर्मनेता वाग्मितावाचस्पतिः जयपुरमहाराजसंस्कृतकालेजस्य अध्यक्ष इत्यन्ता चतुर्वेदीपदात्परं विरुदमाला मुद्रिता । अत्र चतुर्वेदीतिपदं चतुर्वेदाध्येतरि असाधु' यदिकश्चित्समादध्यात्तमभिनन्दिष्यामि । कालेजस्येत्यपिपदम् असाधु श्रवणादेव ग्लानिकरम् मूर्खताप्रवाहपतितं विद्वद्भिरपि संगृहीतमिति विदन्तु सुधियः ।

श्रीमतां गिरिधरशर्मचतुर्वेदानां चपललेखनीमुखादुद्गतानि नागेशविषये निन्दावाक्यानि मिभालयन्तु सुधियः । तथाहि-भूमिकायां चतुर्थपृष्ठे ( नास्ति च साहित्यविषयाणां मार्मिकता नागेशभाषितार्थविचक्षणस्य नागेशस्येति ग्रन्थसम्पादकेन भट्टमहाशयेनैतत्स्फुटीकृतम् इति ) तथा भूमिकायाश्चतुर्थे पृष्ठे एवं सत्यपि "अरविन्दसौन्दर्य्यलक्षणा किंफला इत्यादिना मुधैव खण्डयन् नागेशमहोदयस्तु स्थूलदृश्वैव इति" ।

तथा चतुर्थे पृष्ठे "नागेशभट्टस्य तूपलभ्यमानं यत्र क्वचन व्याख्यानं टिप्पणपदेनाभिलप्यं टीकापदेन वेति संशयास्पदमेवेति एवंविधो नागेशविषये चतुर्वेदोद्गारः अस्तु इमां—

> यन्नादृतस्त्वमलिना मलिनाशयेन
> किं तेन चम्पक विषादमुरीकरोषि
> विश्वाभिरामनवनीरदनीलवेशाः
> केशाः कुशेशयदृशां कुशलीभवन्तु । इति—

प्राचीनोक्तिं संस्मृत्य संतोषं यामि । अये चतुर्वेद शाबरभाष्यस्य भट्टपादविनिर्मितटुपटीकाया अपि लघ्वी का नागे-

शव्याख्या येन तवेदृशः सन्देहः समजनि। अथवा संशयालुप्रकृतिरसि किं ते चिकित्सितम्। किञ्च चतुर्वेद अनेन भवत्प्रशंसितग्रन्थेनामूलाग्रमशुद्धेनको विदुषामुपकारो भवेद्यत् विदुषां साहाय्यं माचरिष्यतीति च लिखन्न विशङ्कसे। अस्य ग्रन्थस्य विदुषामुपकारे नागेशस्य च स्थूलदृश्वतायां या ते दृष्टिः कलुषिता तां परिमार्जयामि अवहितो भव सन्नद्धो भव च समाधाने। अत्र चतुर्वेदेनोक्तम् "महाभागेनानेन सुबहु परिश्रम्य पाठशोधनं तथा विहितम् यदवलोक्य सहृदयाः प्रसीदेयुरिति दृढो मे विश्वासः। (कथं न भवेद्भवतो विश्वासः अत्रैव भवतो भट्टस्य च पाठशोधनस्य निदर्शनमनुपदमुदाहरामि)। अनेन चतुर्वेदेन रसगङ्गाधरस्य—पाठ संशोधने निदर्शनमुपस्थापयता यल्लिखितम् तथाहि द्वितीयपृष्ठे भूमिकायां—"लक्ष्यतया च प्रस्तुताप्रतिपादकत्वस्य प्रतिपत्तिहेतुत्वरूपस्य" अत्र च लक्ष्यतया च प्रस्तुतप्रतिपादकत्वरूपस्य इत्याद्युचितम्', इति चतुर्वेदपाठशोधनम्। अये चतुर्वेद रसगङ्गाधरं परिष्करोषि प्रहरसि वा। सर्वथारसगङ्गाधरं प्रहरसि। पश्यन्तु रसगङ्गाधरमर्मज्ञाः चतुर्वेदस्य पाठसंशोधनम्, शुद्धं पाठमशुद्धमुद्घोष्यमशुद्धं पाठमुचितत्वेन व्यपदिशति अस्य धार्ष्ट्यस्य का चिकित्सा। अनयैव सामग्र्या नागेशं स्थूलदृश्वानं वदसि श्लाघ्यप्रज्ञोसि विदुषां समाजे किमुत्तरं ते यदि अयं पाठः समुचितस्तर्हि व्याख्याहि पश्यामि तव वैदुष्यम्।

किञ्च चतुर्वेद यत्संस्करणं त्वं स्तौषि तस्यापि इदृश्येवगतिः अत्रापि संख्यातिगा अशुद्धयः पतिता यदित्वं कथयिष्यसि तदा निर्देक्ष्यामि। तथाहि—नूतनभट्टसम्पादितसंस्करणे स्थालीपुलाकन्यायेनाऽपपाठाः निर्दिश्यन्ते।

| पृ० | प० | अपपाठ |
| --- | --- | --- |
| १ | १५ | भान्वातपान्यतापम् |

| पृ० | पं० | अपपाठ |
|---|---|---|
| २ | १० | एकद्वित्र्यादिभिः |
| ३ | १६ | अर्थानार्षालङ्कारादीन् |
| ४ | २० | इष्टतावच्छेदकम् |
| ४ | २४ | रमणीयस्याननु |
| ५ | १८ | आस्वादजनकतयाचसिद्ध |
| ६ | ४ | निर्णयाच्चेत्यन्वयार्थौ |
| ६ | ९ | शब्दार्थयुगलशक्तिग्राहके |
| १३ | २ | चुम्बमीति |
| १३ | ८ | त्रपाजनकतया |
| १७८ | ६ | यदन्वयायोग्यार्थबोधकत्वम् । |

एतावन्मात्रमेवोदाहरणार्थं निर्दिष्टाः सर्वेषां निर्देशे लघु पुस्तकं जायेत यदि इमे उदाहृताः पाठाः शुद्धास्तर्हि व्याख्याहि । तव व्याख्योत्तरमेव निवेदयिष्यन्ते सयुक्तिप्रमाणम् साधुपाठाः ।

किञ्च प्रारम्भिकवक्तव्ये ५ पृष्ठे चतुर्वेदेन निबद्धम्—तथाहि सेयं सरला जटिलमपि ग्रन्थं विद्यार्थिनामवबोधाय सरलीकर्तुं चेष्टते । लेखे माभूद्विस्तर इति पुस्तकोद्घाटने स्वतएवोपस्थितं निदर्शनमुपस्थापयामि पृ० २५१ "अरविन्दवत्सौन्दर्य्यमस्येत्यत्रारविन्दशब्दस्यारविन्दसौन्दर्य्यलाक्षणिकतयाऽरविन्दसौन्दर्य्यनिरूपितसादृश्याधिकरणमेतत्सम्बन्धिसौन्दर्य्यमिति मुखारविन्दयोः सादृश्यबोधे शाब्दे तयोरभेदाध्यवसायादभिन्नधर्ममूला पश्चान्मुखारविन्दयोरपि सादृश्यधीः ( इतिमूलग्रन्थः ) टीका—अर्थात् अरविन्दपदस्य अरविन्दसौन्दर्य्यार्थे लक्षणा ततश्चारविन्दपदस्यारविन्दसौन्दर्य्यमित्यर्थः । सौन्दर्य्यञ्च सादृश्यस्य निरूपकं (प्रयोजकम्) । तथाचारविन्दसौन्दर्य्यं निरूपितं ( प्रयोज्यम् ) यत्सादृश्यं तदधिकरणं ( तदाधारः आश्रयः ) अस्य सौन्दर्य्यमर्थात् एतत्सम्बन्धि

सौन्दर्य्यमित्याशयः। अस्मिन् शाब्दबोधे सौन्दर्य्यरूपसाधारण-धर्मस्य अस्य इत्युपमेये अरविन्दे इत्युपमानेच सम्बन्धः सुस्पष्टं प्रतीयते।

क्षोदक्षेमेऽपि सरला प्रवर्तते—अत्र हि—तत्र तस्येवेति वते-रिवार्थे विहितत्वेन सादृश्यार्थकस्य तत्प्रयोजके लक्षणयाऽरवि-न्दसादृश्यप्रयोजकमेतत्सम्बन्धि सौन्दर्य्यमिति बोधे उपपन्ने अरविन्दपदस्य अरविन्दसौन्दर्य्यलक्षणा किंफला किंप्रमाणा चेति चिन्त्यमिदम् इति नागेशो मूलं खण्डयति सरलाऽत्र साधु समाधत्ते।

अरविन्दसादृश्यप्रयोजकमेतत्सम्बन्धिसौन्दर्य्यमिति नागेशोप-पादिते शाब्दबोधे तु उपमेयमात्रे सौन्दर्य्यस्यान्वयः प्रतीयते। अरविन्दवत्सौन्दर्य्यमस्येत्युक्तौ स्वारसिकश्च सौन्दर्य्यस्योभयत्र संबन्धः एवंसत्यपि 'अरविन्द सौन्दर्य्यलक्षणा किंफला, इत्यादिना मुधैव खण्डयन् नागेशमहोदयस्तु स्थूलदृश्वैव इति चतुर्वेदस्य पद-पङ्क्तिः। अयं भूमिकाग्रन्थो चतुर्वेदस्यानूदितः पाठकानां सौकर्य्याय।' अत्रेदं वक्तव्यम्। मुखारविन्दयोः सादृश्यबोधार्थं पूर्वः शाब्दबोधः उपायभूतः मुखारविन्दयोश्च सादृश्यबोध उपेयभूतः। प्रथमः शाब्दः द्वितीयश्च मानस इतिविवेकः। अतएव मूलकृता सादृश्य-बोधे शाब्दे········पश्चान्मुखारविन्दयोरपि सादृश्यधीरिति विविच्यैव लिखितम्। नागेशेन तु उपेयभूतस्य बोधस्यान्यथाप्युप-पादनादरविन्दसौन्दर्य्यलक्षणा किंफला ( फलस्यान्यथासिद्धेरिति भावः ) किंप्रमाणाचेति चिन्त्यमिदम् इति निबद्धम्।

तद्द्वयमबुद्ध्वैव महाप्रज्ञेन भट्टेन "अस्मिन् शाद्बंबोधे सौन्दर्य्य-रूपसाधारणधर्मस्य अस्य इत्युपमेये अरविन्दे इत्युपमाने चसंबन्धः सुस्पष्टं प्रतीयते इति प्रलेपे। रसगङ्गाधरकृत्तुमुखारविन्दसौन्दर्य्य-योः सादृश्यबोधे शाब्देइति वदन् पश्चान्मुखारविन्दयोरपि

सादृश्यधीरिति लिखति नागेशनिन्दकौ च विद्वत्प्रकाण्डौ मानस-बोधं शाब्दत्वेन निर्दिशतः अहो किमतो नग्ननृत्यमज्ञानस्य इति सुधियो विमृशन्तु इति । पूर्वत्रानुपदमुदाहृतं रसगङ्गाधरग्रन्थं नागेशग्रन्थं च निभालयन्तः सुधियोऽहतप्रज्ञभट्टग्रन्थं च निभाल्य पश्चाद्यदुचितं तत्समर्थयन्तु विद्वांसः । किमतः परं त्रपाकरं यः रसगङ्गाधरभाषाज्ञानेऽपि असमर्थः स नागेशं स्थूलदृश्वानं वदति । यदि कोऽपि पृथिव्यां पण्डितानुमतं अत्र समादध्यात् स मम मान्यो भवेत् । अये चतुर्वेद रसगङ्गाधरमर्मप्रकाशं खण्डयितुं कथं प्रवृत्तोऽसि न श्रुतं त्वया 'अन्धस्यैवान्धलग्नेन विनिपातः पदे पद' इति । भवान् वाग्मितावाचस्पतिर्नतुरसगङ्गाधरवाचस्पतिः । अये चतुर्वेद या ते इयं मलिना पदपङ्क्तिः नास्ति च साहित्यविषयाणां मार्मिकता नागेशस्येति सा द्वेषमूला अज्ञानमूला वा ! यदि आद्यः तदतीवानुचितम् । जगद्गुरौ नागेशे सर्वशास्त्राणां व्याख्यातरि । यदि अज्ञानमूला तदा काव्यप्रदीपोद्योतं रामायणटीकां रसमञ्जरीटीकां पठ । यदि तदापि न शान्तिस्तदा विद्वद्भिः संवदस्वेति सुहृद्भूयोपदिशामि ।

किञ्च अये चतुर्वेद योऽयं मर्मप्रकाश उदाहृतस्तत्रापि संशोधकाज्ञानात्पाठो भ्रष्टः तत्रैवंविधः पाठः "तत्रतस्येवेति वतेरिवार्थे विहितत्वेन सादृश्यार्थकस्य तत्प्रयोजके लक्षणया विनैवान्वये अरविन्दसादृश्यप्रयोजकमेतत्संबन्धिसौन्दर्य्यमित्यादि ।

किञ्च चतुर्वेद यस्तवप्रकाण्डपण्डितः स नागेशग्रन्थे प्रयोजकपदमुपलभ्य निरूपितम्–प्रयोज्यम् , निरूपकं प्रयोजकम् इति निबध्नन् अन्धग्रामीणगजवृत्तान्तन्यायमनुहरन्नतीवोपेक्ष्यः । नहि पृथिव्यां कोपि विद्वान् निरुपकप्रयोजकनिरूपितप्रयोज्ययोः समानार्थकत्तां प्रतिपद्यते । अस्य सर्वापि सरला अशुद्धैव न कश्चिदत्रांशलवोऽपि साधुः । किञ्चायं टीकाकृत्सर्वत्र अर्थादिति लिखति । अस्यकोर्थः

अर्थशब्दस्याभिधेयेषु कोपि क्वापि न संगच्छते। किञ्चास्य सन्धिज्ञानं लिङ्गज्ञानमपि नास्ति। कोशेऽप्यव्युत्पन्न एवेति गुरुमर्मकण्टकोद्धारे उदाहरिष्यामि अवहितेन पठनीयम्। आत्माज्ञानमेव नागेशेषु जगद्गुरुणारोपितम्। अयं क्षुद्रजन्तुः पदे पदे नागेशमाक्रोशन् हठात्साहित्यवलभीमारोढुमाक्रामति विवादवेतालग्रस्तस्येत्यादि लिखति तत्कथं त्वया सोढम्। नागेशो न तव गुरुः त्वया शेखरद्वयम् नाधीतम्। रसगङ्गाधरे च विद्वदपेक्षितमवशिष्टम् किं व्याख्येयं यन्नागेशेनोपेक्षितं मर्मप्रकाशनमेव नागेशेन प्रतिज्ञातम्। तत्तु सम्यक् तेन विहितम्। मूर्खाणां तु भाषयापि न शङ्कापसरः। किं तेन कृतं भवेत्।

किञ्च चतुर्वेद अस्य ग्रन्थस्याशयस्तु पूर्वं निबद्धः इदानीं सरलाग्रन्थस्य विवेचनं मनाक् निभालय। तथाहि पूर्वोदाहृते एव नागेशद्विषो लेखे "अर्थात् अरविन्दपदस्यारविन्दसौन्दर्य्यार्थे लक्षणा (सर०) अत्रेदं वक्तव्यम् मूलकारः अरविन्दशब्दस्यारविन्दसौन्दर्य्यलाक्षणिकतया इति वदति तट्टीकाकृत् प्रवुद्धः अरविन्दपदस्यारविन्दसौन्दर्य्यार्थे लक्षणेति। अयं पण्डिताभिमानी अरविन्दवत्पदघटकमरविन्दशब्दं पदत्वेन व्यपदिशति अपदं पदं ब्रूते मूलकारः सौन्दर्य्ये लक्षणां वदति अयं लोकोत्तरपण्डितः सौन्दर्य्यार्थे लक्षणां वदति अहो कियान् प्रमादः प्रमत्तस्य। पदशब्दयोः समानार्थकतां च विपर्य्यस्यति। न हि कोप्यनुनन्मत्तः गङ्गायां घोष इत्यादौ तीरार्थे लक्षणां वदति। "ततश्चारविन्दपदस्यारविन्दसौन्दर्यमित्यर्थः सौन्दर्य्यञ्च सादृश्यस्य निरूपकम् (प्रयोजकम्) तथाच अरविन्दसौन्दर्य्यनिरूपितं प्रयोज्यं यत्सादृश्यं तदधिकरणं (तदाधारः आश्रयः) अस्य सौन्दर्यम् अर्थात् एतत्सबन्धिसौन्दर्य्यमित्याशयः (सर०) अत्रापि इदं वक्तव्यम् अयं नागेशाक्रोशकः अर्थादिति परः सहस्रम् प्रयुक्तवान् अस्यार्थादिति पदस्य कोह्यर्थ

इति परिडतचतुर्वेद एव जानातु। किञ्च निरूपकम् प्रयोजकम् निरूपितं प्रयोज्यमिति विवृणोति तथाच यदि सौन्दर्य्यं सादृश्यस्य प्रयोजकम् तदा अरविन्दसौंदर्य्यप्रयोज्यं यत्सादृश्यं तदधिकरणमित्य द्यर्थः स च न सम्भवति अरविन्दसौन्दर्य्यप्रयोज्याभावादेतत्सम्ब-न्धिसौन्दर्य्यसादृश्यस्य। अये सुधीवर पामर सादृश्यप्रयोजकता साधारणधर्मेऽस्ति, केन शिक्षितोऽसि सादृश्यप्रयोजकतोपमानो-पमेययोः सर्वथैवाशिक्षितोऽसि नागेशाक्रोशनपण्डित ! । वस्तुतस्तु इदमत्ररहस्यं प्रतीयते अयं नागेशाक्रोशकः मूले निरूपितशद्वं दृष्ट्वा मर्म प्रकाशे च प्रयोजकशब्दं दृष्ट्वा न किञ्चन निश्चेतुं प्रभवति प्राभवच्च तथाचाप्रवुद्ध इव कचित् प्रयोजकपदं कचिच्च प्रयोज्यपदं प्रललापे ति रहस्यविदः "अस्मिन् शाव्दबोधे, इति सरला ( अस्मिन् कस्मिन् अरविन्दसौन्दर्य्यनिरूपितसादृश्याधिकरणमेतत्सबन्धि-सौन्दर्य्यमिति मूलकृन्निर्दिष्टबोधे ) सौन्दर्य्यरूपसाधारणधर्मस्य अस्येत्युपमेये अरविन्दइत्युपमाने च सम्बन्धः सुस्पष्टं प्रतीयते। ( अये भट्ट तवैव सम्बन्धः सुस्पष्टं प्रतीयते न तु जगन्नाथस्य सच पश्चान्मुखारविन्दयोरपि सादृश्यधीरितिलिखति यः शाव्दबोधं मानसवोधं वा विवेक्तुं न प्रभवति स्वप्रशंसकेन सह स रसगङ्गाधरं व्याचष्टे अयमेव उद्वाहुवामनन्यायः । अहो ते शिक्षा केन रसगङ्गाधरे शिक्षितोसि। अये महामहोपाध्याय चतुर्वेद तव प्रकाण्डपण्डितस्येदृश्येव गतिः सर्वस्यां सरलायाम् । अहो यः प्रलापी रसगङ्गाधरभाषामपि न जानाति स रसगङ्गाधरं व्याख्यातुं प्रवृत्तः नागेशं चाक्रोशति दुर्वादैः । एतदेवाभिप्रे-त्योक्तम् जगन्नाथेन—

लीलालुण्ठितशारदापुरधियामस्मादृशानां पुरो
विद्यामन्दिरनिर्गलत्कणमुषो वल्गन्ति चेद्बालिशाः ।

अद्य स्वः फणिनां शकुन्तशिशवो दन्तावलानां शशाः
सिंहानाश्च सुखेन मूर्धसु पदं धास्यन्ति शालावृकाः ॥

अये बुद्धिसागर अत्र कस्याप्यनुन्मत्तस्य प्रज्ञावतोऽरविन्द मुखयोरुपमानोपमेययोः शाद्बः साधारणधर्मसम्बन्धो मनागपि न प्रतीयते सुस्पष्टमित्युक्तिस्तु तवैव आन्ध्यपरिचायिका । यदिप्रकृतयोरूपमानोपमेययोरत्रसाधारणधर्मसवन्धः शाद्बः स्यात्तदा मूलकारः मुखारविन्दसौन्दर्य्ययोः सादृश्यबोधे शाब्दे तयोरभेदाध्यवसाया दभिन्नधर्ममूला पश्चान्मुखारविन्दयोरपि सादृश्यधीरिति कथं ब्रूयात् अतः प्रथमं मुखारविन्दसौन्दर्य्ययोः सादृश्यग्रहणं शाद्बम् पश्चान्मुखारविन्दयोरपि सादृश्यधीरिति गृहाणानुगृहाण नागेशं त्यज मतिकर्दमम् ।

अस्य भट्टशावकस्य प्रज्ञामान्द्यं विवेचयन्तु सुधियः । अयं भट्टशिशुः स्वभूमिकायाम् यदुल्लिखति नागेशः टीकासापेक्षाणि कठिनस्थलानि सर्वथा परित्यजति वालकैरपिज्ञेयान् सुप्रसिद्धान् पदार्थान् स्थाने स्थाने व्याख्यातीति । ( अयं भट्ट शिशुः पदानीति वक्तव्ये पदार्थानिति प्रयुञ्जानो न लज्जते बिभेति च न विदुषां पुरः ) अस्य व्याख्याशैलीं चतुर्वेद समर्थितां पश्यन्तु सुधियो ऽस्मिन्नेव प्रसङ्गे—यथा तदधिकरणम् तदाधारः आश्रय इति व्याचक्षाणस्येति । इदं मन्द . अपेक्षितम् व्याख्यानम् । इयमेव व्याख्याशैली अस्य भट्टशावकस्य विद्वदुपकारिका का । किञ्चायं व्याख्याचौरः प्रतीकदानेऽपि नागेशस्याकौशलं वदति "प्रतीकदान प्रकारोऽत्यन्तं भ्रामकः यथा मन्नीति इत्येतावन्मात्रं लिखति अनेन मन्निर्मिता पञ्चलहर्य्य इति प्रतीकं कथं वा झटिति बुध्येत इति" भूमिकायां ३९ तमे पृष्ठे प्रलपति । व्याचष्टे च मन्निर्मिताः पञ्चलहर्य्यं इति प्रतीकम् । अये भट्ट कोशज्ञानमपि ते नास्ति

सहैव लिङ्गज्ञानेन, किं नागेशं विजेतुं प्रस्थितोऽसि शोच्योऽसि पदे पदे स्खलन्। प्रतीकोऽवयवे पुंसीत्यमरानुशासनात् प्रतीकशब्दस्य नित्यपुंल्लिङ्गत्वात् प्रतीकं बुध्येदिति कथं प्रयुक्तम्। मन्निर्मिताः पञ्चलहर्य्य इति प्रतीकम् ( अये भट्ट ,प्रतीक इति प्रयुज्यताम् हसन्ति छात्रास्तवाज्ञानेन। किञ्च भट्ट मन्निर्मिताः पञ्चलहर्य्य इति कस्य प्रतीकं। नायं प्रतीकः किन्तु प्रतीकी। पश्यन्तु सुधियः पण्डितप्रकाण्डपदलाञ्छितस्य प्रकाण्डपाण्डित्यम्। यस्य लिङ्गज्ञानमपि नास्ति स रसगङ्गाधरं व्याख्यातुं प्रवृत्तः कियदस्य धाष्टर्यम्। इयदेवास्तु अस्यायोग्यतापरिचायकम्। प्रकृतमनुसरामि अमुमेव प्रवन्धं पुरस्कृत्य सरलां समर्थयता चतुर्वेदेन सेयं सरला जटिलमपि ग्रन्थं सरलीकर्तुं चेष्टत इत्यारभ्य यद्यपि यादृशी विस्तृता टीकेत्यतः-प्राक्तनेन सादृश्यबुद्धिः सिद्धतीत्यन्तेन प्रवन्धेन सरलासौष्ठवं विवेचयता किमपि उद्गीर्णम्। अनेन चतुर्वेदेन सरलासौष्ठवं प्रतिज्ञायापि न किञ्चिद्धेतुत्वेनोपन्यस्तम् अहो अस्य सम्मतिसौष्ठवं सन्मतिसौष्ठवञ्च। तथापि किञ्चिदत्रावश्यकं वक्तुमापतितम्।

अये महामहोपाध्याय यो बोधो जगन्नाथेन लक्षणया समर्थितस्तं लक्षणां विनैव समर्थन्नागेशः कथं स्थूलदृश्वा। स्थूलदृश्वातु समालोचको यो नागेशाशयमबुद्ध्वैव विदुषां समाजे धृष्ट इव प्रगल्भमानो न लज्जते। तथाहि अरविन्दवत्सौन्दर्य्यमस्येत्यादौ सादृश्यार्थकवतिना सादृश्ये उपस्थापिते तस्य प्रयोजकतासम्बन्धेन एतत्सम्बन्धिसौंदर्य्येऽन्वये अरविन्दसादृश्यप्रयोजकमेतत्सवन्धिसौन्दर्य्यमितिवोधे वृत्ते तुल्यवित्तिवेद्यतान्यायेनार्थापत्या वा साधारणधर्मो भासतां नवा स्थूलतमदृशां परदर्शितदर्शिनां न काचिदस्य हानिः, मन्ददृष्टिसिद्धस्य पदार्थस्य भानाभानयोः। रसगङ्गाधरकारस्तु मुखारविन्दसौन्दर्य्ययोः सादृश्यभानमुपपादयति मुखारविन्दयोः पार्ष्ठिकसादृश्यभानार्थम् ( महामहोपाध्य

यस्तु द्वितीयं पार्ष्ठिकबोधमपि शाब्दबोधं मनुते मूलकृता पश्चात्पदेन बोधितोऽपि, किमतोऽधिकमनर्थकरं भवेत् रसगङ्गाधर भाषाज्ञानेपि अशक्तः नागेशं स्थूलदृश्वानं वदति । अहो मोहं महिमा ) । तच्चान्यथोपपद्यतेऽर्थापत्या तुल्यवित्तिवेद्यत्वेन वा । सौन्दर्य्ये लक्षणापर्य्यन्तमनुधावनं मूलकृतो मुखारविन्दयोः सादृश्यभानार्थमेव तच्च पार्ष्ठिकमेवेति नात्र विदुषां विप्रतिपत्तिलेशोऽपि । तच्चात्यथैव सिद्ध्यति । किञ्चारविन्दनिरूपितसौन्दर्याधिकरणत्वप्रकारकैतत्सम्बन्धिमुखविशेष्यकबोधे मूलकृत्समर्थिते नहि साधारणो धर्मः सौन्दर्य्यं किन्त्वसौधर्मी तत्र साधारणो धर्मोऽन्य एव इति विद्वन्मात्रवेद्यमर्थं कथमशिक्षितः कश्चिद्गृह्णातु । अतोऽत्र यथार्थं नागेशः सूक्ष्मदृक् सारदृक् । यदि लक्षणायाः किमपि फलं भवान् पश्यतु तदा निर्दिशतु । मर्मप्रकाशग्रन्थस्तु लेखकप्रमादादतीव भ्रष्टोऽत्रैतादृक् पाठोऽनुसन्धेयः तत्र तस्यैवेतिं वतेरिवार्थे विहितत्वेन सादृश्यार्थस्य तत्प्रयोजके लक्षणां विनैवान्वयेऽरविन्दसादृश्यप्रयोजकमेतत्सबन्धिसौन्दर्य्यमिति बोधे उपपन्न इत्यादि । मुद्रितपाठे तत्प्रयोजकेत्यादिपाठस्तु लेखकप्रमादादेवेति । यथा गणिकाजामिलमुख्यानित्यादिपद्यव्याख्याने जार इत्यस्य स्थाने राजेति भ्रष्टम् । यमालम्ब्योच्चैश्चोकुर्दतानेन मन्देनापशङ्कितम् ।

रसगङ्गाधरपाठस्य यथा भ्रंशस्तथाऽध्ययनसंप्रदायविलोपान्मर्मप्रकाशपाठस्यापि दुर्दशैवेति सर्वसम्मतम् । अस्यां स्थितौ कस्यापिजगद्गुरोर्गालीप्रदानम् महापातकमेव तच्छ्रवणमपितथैव । अतएव जगद्गुरुः कालिदासः उमामुखेन—"न केवलं यो महतोऽपभाषते शृणोति तस्मादपि यः स पापभागिति" व्याजहार । यश्चामुमनर्थकारिणं प्रोत्साहयति सोऽपि पातकीति । अतं आवश्यकमस्य प्रायश्चित्तानुष्ठानम् । तज्ज्ञानम् धर्मशास्त्रज्ञादतो मामुपेत्य प्रायश्चित्तं

बुद्ध्वा काश्यामनुष्ठेयमन्यथा—स साधुभिर्बहिष्कार्य्यः सर्वस्माद्द्विज-कर्मण इतिधारा प्रचरिष्यति अपराधिनि इति मन्तव्यम्। अये चतुर्वेद षड्दलात्मके सम्मतिपत्रे यत्त्वया पराक्रान्तम्। तत्र सरलायाः साधुत्वं प्रतिज्ञायापि न किञ्चिन्मानमुपन्यस्तम् यदि किञ्चिदत्र समाधानं भवेत्तदा पुरोभूय वक्तव्यम् सदैव प्रस्तुतोऽस्मि तच्छ्रवणार्थम्। अये म०म०सरला—गणनाथ इत्यारभ्य एषखण्डावशेषोऽपि राकेशो रमयेन्मन इत्येतत्पर्य्यन्तमाचूडमेवाशुद्धेति निर्धारय यदि तत्र प्रभवसि, नोचेदत्र यमंशं सर्वथा निर्दोषं पश्यसि तं मत्पुरत उदाहर निदर्शयिष्यामि दोषगणम् इति सत्यं प्रतिजाने।

गणनाथे प्रणमतेत्यत्र द्वितीयया भाव्यम् सप्तम्यर्थस्यासमाधेयत्वात् असमाधेयता च सप्तम्यर्थव्युत्पन्नस्य प्रसिद्धैवेति नोपपादनावसरः। "एष खण्डावशेषोऽपि राकेशो रमयेन्मन" इति भट्टशावक रचना। तं बोधय नागेशस्य कोषसाहित्यज्ञानं लोकातीतमेवेति आक्षिपत्रं नहि खण्डावशेषो राकेशः, केनपाठितोऽसि। राकापूर्णेनिशाकरे इति अमरशासनमपि नजानासि यस्यते अभिमानः कोशज्ञतायाः। सुस्थिरो भव द्रष्टासि गुरुमर्मप्रकाशकण्टकोद्धारे प्रज्ञाञ्जने च स्वमतिप्रकर्षम्। अये म०म० संस्कृतकालेजस्य, चतुर्वेदी इत्यादि पदानाञ्च साधुता केन व्याकरणेनाध्यवसिता। तरुणीपुष्पस्य कण्टकिताच कुत्रावलोकिता।

रसगङ्गाधरपाठशोधने पण्डितानाक्षिपता त्वयाऽत्रलक्ष्यतया च प्रस्तुतप्रतिपादकत्वस्य इत्याद्युचितमिति लिखितम्। भवच्छोधितपाठं जगन्नाथोऽपि व्याख्यातुं न प्रभवेत्किमु इतरः। एषैव पाठशोधनेऽनधिकृतस्य गतिर्भवतीति गृहाण।

किञ्च भवत्प्रकाण्डपण्डितत्वेन संस्तुतो भट्टः नागेशमलङ्कार चन्द्रिकाचौरं प्रलपति इदञ्च त्वयानुमतमपि तस्येतिहासज्ञतां समूलमुन्मूलयामि अवहितो निशामय—

## अलङ्कारचन्द्रिकाचौर्य्यकलङ्कनिराकरणम्

निभालयन्तु च विद्वांसः अपरञ्चास्य भट्टस्य यथाकथञ्चिन्नागेशनिन्दानिरतस्य ऐतिहासिकदृष्टिरहितस्य नागेशकलङ्कारोपणम् ।

अयं नूतनमुद्रितस्य निर्णयसागरमुद्राशालायां रसगङ्गाधरपुस्तकस्य भूमिकायां ३५ तमे पृष्ठे प्रलपति अयं नागेशः कुवलयानन्दटीकायाः अलङ्कारचन्द्रिकायाः अपहरणं कृत्वैव रसगङ्गाधरमाक्षिपति–तथाहि भूमिकायां ३५ तमे पृष्ठे नागेशटीकायास्तत्त्वविमर्शनमित्युपक्रम्य नागेशः स्वटीकायां बहुशः शब्दविषयक विचारमेव व्याख्यातुं समाधातुञ्च चेष्टते इति ( अये मन्दभट्ट नहि विचारः व्याख्यायते समाधीयते च कथं प्रमाद्यसि अवहितो भव) अलङ्कारविषयेतु यत्र यत्र कुवलयानन्दकारस्य पक्षपुष्टिं करोति भूयस्त्वंशेषु तत्र तत्रालङ्कारचन्द्रिकायाः कुवलयानन्दटीकायाः विचारा एवाधाराः । यथा चिकीर्षायाः कार्य्यमात्रं प्रति हेतुत्वं यदयं खण्डयति तदेतदसङ्गत्यलङ्कारस्थालङ्कारचन्द्रिकास्थमखिलम् । पङ्क्तयोऽप्यविकलास्ता एव ( पृ० ५९४ ) खिन्नोसि मुञ्चेत्यादिपद्ये पण्डितराजेन साधिताया अनिष्टप्राप्तेर्निरास अलङ्कारचन्द्रिकास्थ एव । किन्त्वलङ्कारचन्द्रिकोपजीवनेऽपि तस्या यथा मर्मस्पर्शीन्यक्षराणि न तथा नागेशस्य केवलं विषयमात्रमपहृत्योज्जगार······ ······एवं स्थाने स्थाने ऽलङ्कारचन्द्रिकाचमनेपि न कुत्रचिदुल्लेखः इत्यादि बहु प्रललाप प्रमत्तः । तस्यायं प्रलापः इतिहासानभिज्ञतामूल एव । तथाहि–अलङ्कारचन्द्रिकाकारो वैद्यनाथः श्रूयते नागेशशिष्यः सम्भाव्यते च । अनेन महाभाष्यप्रदीपोद्योतस्य छायानाम्नी काचिद्व्याख्या लिखिता सा निर्णयसागरमुद्राशालातः प्रकाशिता । अयमेव वैद्यनाथः काव्यप्रदीपस्य प्रभानाम्नीं टीकां निबबन्ध । यस्या निर्माणसमयं प्रभासमाप्तौ निर्दिष्टं । वियद्वेदमुनिक्ष्माभि १७४०

मिते॰दे कार्तिके सिते। बुधाष्टम्यामिमं ग्रन्थं वैद्यनाथोऽभ्यपूरयदिति। दुर्गाप्रसादैर्महामहोपाध्यायैः प्रदीपभूमिकायां स्पष्टीकृतम् अनेन पद्येन प्रभासमाप्तिसंवत्सरः १७४० वैक्रमः । अलङ्कारचन्द्रिकासमयोऽपि एतदन्तिक एव। अस्मिन् समये खिस्तसंवत्सरान्तरस्य ५७ वर्षाणां सप्तपञ्चाशतो योजने १७९७ इति जातम् । नागेशक्षेत्रसंन्याससमयश्च भट्टेनैव रसगङ्गाधरभूमिकायां निर्दिष्टः १७०६ मिताः खिस्ताब्दाः । अस्मिन्समये क्षेत्रसंन्यासं कृतवतो नागेशस्य सप्तत्यूर्द्ध्वमेवायुरासीदिति संभाव्यते। ततः परं दशभ्यः पञ्चदशभ्यो वा वर्षेभ्यः शरीरं त्यक्तवतो नागेशस्य मरणादनन्तरं सप्ततिवर्षाणामूर्ध्वं लब्धजनेरलङ्कारचन्द्रिकायाः विषयानाहृत्य नागेशा रसगङ्गाधरमाक्षिपतीति कियत्सत्यम्। कियच्च धाष्टर्यमस्य नागेशनिन्दकस्य। अये गुरुनिन्दक भट्ट नागेशमरणोत्तरभाविनीं नागेशपौत्रीवयस्यामालङ्कारचन्द्रिकां नागेशो मनसापि नो समवीभवत् किं ततो विषयापहरणम्। यां टीकां पर्य्यायोक्तप्रकरणस्थां नागेशो निरदिक्षत सा तु नागेशस्यैवेति विदुषां प्रसिद्धिः। सा च लघुकाया टिप्पणीरूपेति मनसि निधाय नागेशटीकामलङ्कारचन्द्रिकायामन्तर्भावयन्नेवालङ्कारचन्द्रिकां जग्रन्थ वैद्यनाथ इति मूलं भ्रान्तेरस्य नागेशद्रुहः । नैवंविधः स्वभावः साधारणस्यापि विदुषः किं पुनर्लोकाधिकवैदुष्यस्य नागेशस्येत्यलम्। भट्टकुलनीतिरेवैषा सता असता वा दोषेण परनिन्दनम्। एषैव वा भट्टता का।

अयि भट्टशिशो पापं नागेशाक्रोशजं परम् ।
कथं मार्जयिताऽकल्पं कुम्भीपाके भविष्यसि ॥१॥

नो दृष्टो नो श्रुतो भट्ट त्वद्विधः परनिन्दकः ।
ऐतिहासिकसत्यस्यापलापी च भवादृशः ॥२॥

हर हर महादेव । अनेन गुरुमर्मकण्टकोद्धरणेन पार्वती-परमेश्वरौ प्रीयेताम् । नागेशश्च प्रसीदतु स्वस्थाश्च भवन्तु सुधियो नागेशे भक्तिभाजः ।

## अथ गुरुमर्मप्रकाशाक्षेपाः सपरिहाराः

अपरञ्च निभालयन्तु मन्दाक्षेपं सुधियः नागेशनिन्दकस्य ६७१ तमे पृष्ठे लवलीलतेत्यस्य व्याख्यानं लवली राइ आँवले हरफारेवडी इति प्रसिद्धा इति नागेशव्याख्यानं दूषयता द्रविड शिशुना नागेशः जयपुरीयो गृहीतः काश्यां तु लवली हरफारेवडी राय आंवला इति नामद्वयेनैव दक्षिणात्येषु इतरेषु च प्रसिद्धा । तदत्राज्ञानमारोपयतो मन्दमतेः पततु जनाक्रोशनपविपरम्परेति। एतादृशा एवाक्षेपा रण्डाक्रोशनमिव बहवो भट्टशिशुना कृतास्तद्यो-ग्यतापरिचायका इति शिवम् ।

११८ तमे पृष्ठे अनुचितविभावालम्बनत्वं रसाभासत्वमिति रसाभासं लक्षयित्वा शतेनोपायानामिति पद्येनोदाहृत्य व्याख्यत रसगङ्गाधरकृत् तत्र ११९ तमे पृष्ठे गुरुमर्मप्रकाशस्याधो लम्बमाना यामचेतयन्त्यां सरलायां धीदुर्बिधो भट्टः प्रलपति । "ग्रन्थकर्तु-र्विरुद्धमिदं । तदीयामपि रतिम् अर्थात् नायिकाया अपि रतिमिति वदता ग्रन्थकृता अपिना नायिकाया अपि रतिः समुच्चीयते । अर्थात् उपायशतेन सौधशिखरमारोढुर्नायकस्य रतिस्तु स्फुटैव परं स्मेरवदनाया अपि रतिरस्त्येवेति स्फुटं चेदमुचितम् नागेशमहो-दयस्तु तदीयामपि रतिं स्फुटं वदन्तं ग्रन्थकारं पराभूय रतिमपि इत्यर्थं वदन् हर्षसमुच्चायकमाह । अर्थात् नायिकाया रतिमभि-व्यनक्ति,हर्षमपि इति ग्रन्थास्वारस्यं कियद्दूरं गलहस्तितमिति मर्म-विदो विद्युरेव । हर्षमभिव्यञ्जयन् इति मूलोक्तस्फुटोक्तावपि इतिसरला । (अये धीदरिद्र मूलोक्तस्य का स्फुटोक्तिः नहि उक्तस्य

उक्तिः सतु दोषः निद्रायसे प्रमाद्यसि वा यस्मादेवं वदसि नहि कश्चिदप्रमत्तोऽसुप्तो वा एवं प्रलपति, मूलोक्तस्य नो काचिदुक्तिः स्फुटोक्तिस्तु दूरापास्ता ) न टीकाकर्तुर्दृष्टिरिति हन्त एवमेव स्थाने स्थाने साहित्यमार्मिकत्वमभिनीतं क्वचित् क्वचिदेव निदर्शितमित्यलं प्राचां वाचां विचारेण (सरला) (एतावानस्य भट्टस्याक्षेपः टीकायाम् सरलायाम् ) अत्र निभालयन्तु सारासारविवेचनमतयः सुधियः रसगङ्गाधरग्रन्थम् । अत्र जगन्नाथः मत्प्रियः मदर्थं प्राणानपि तृणीकृत्यागत इति ज्ञानादुत्पन्नं हर्षमभिव्यञ्जयत् स्मेरवदनामिति विशेषणं रतिं तदीयामपि व्यनक्ति इति जग्रन्थ। अत्र व्यनक्ति इत्यस्य कर्तृपदं स्मेरवदनामितिविशेषणपदम्' । अभिव्यञ्जय-दित्यत्र लक्षणहेत्वोः क्रियाया इति हेतौ शता। यथा अर्जयन् वसतीत्यादौ तत्र अर्जनहेतुकवासकर्ता इति बोधः । तथात्रापि हर्षा-भिव्यक्तिहेतुकैव रत्यभिव्यक्तिरिति बोधे रतिं तदीयामपि व्यनक्ति इत्यत्रापिना कान्तायाः हर्षस्यैवाभिव्यक्तिरिति नागेशव्याख्यैव एवमुचिता अन्यथाऽपिपदवैयर्थ्यापत्तेः । साहित्यद्रुमदावानल स्मेरवदनामितिपदस्य नायिकारतिव्यञ्जकस्य चौरनायकरति-व्यञ्जकता कथम् । साहित्यानभिज्ञ स्मेरवदनामिति पदं तदीया-मपि रतिं व्यनक्ति इति अमुं ग्रन्थं कथं नेत्रे निमील्य योजयसि अत्र नायकरतेः समुच्चयार्थं न अपिपदं प्रयुक्तम् । तस्य पूर्वार्धेनै-वाभिव्यक्तेः, किन्तु हर्षाभिव्यक्तेरेव नायिकायाः समुच्चायकोऽपिः स च स्वशब्देनैव निवेदित इति व्यर्थमेव प्रयुक्तोऽपिः ग्रन्थकृता इत्याक्षेपं परिहरद्भिर्यथा कथंचित् नागेशै रसगङ्गाधरो योजित इति सुधियो विवेचयन्तु। धृतिञ्च लभतां भट्टः साहित्यमर्मज्ञः ।

अयं वटुभट्टः पाणित्यादीनाचार्य्यानपि आचिक्षेप । भूमिकायां १३ तमे पृष्ठे । तद्यथा "कदाचित्कदाचित्त्वेवं बुद्धावाभाति यत्त-त्तच्छास्त्राणां नियमा न तत्तद्ग्रन्थप्रणेतॄणामाचार्य्याणां कृते तत्र–

भवान् पाणिनिः शब्दसाधुत्वनियमानाह परं स्वयमेव स्वसूत्रेषु तान्नियमान्नुपेक्षते—ह्रस्वनद्यापोनुट् १ एङ्ह्रस्वात्संबुद्धेः २ ऊकालोज्झ्रस्वदीर्घप्लुत ३ इत्यादिषु। द्वयोर्बहूनां च समुच्चये कुतो न द्विवचनबहुवचने, समाहारे वा कुतो न नपुंसकत्वम्, बन्धुनि बहुव्रीहावित्यत्र नित्यपुँल्लिङ्गस्य बन्धुशब्दस्य सप्तम्येकवचने बन्धुनि इदं निष्पन्नम् इत्यादि नियोगावकाशो न तत्र। समाधीयते च तत्र तत्र छन्दोवत्सूत्राणि इति लघुमुखदीर्घरावस्याक्षेपः। अत्र समाधीयते। अये अवैयाकरण भट्ट त्वदुदाहृतत्रिसूत्र्यां ह्रस्वनद्यापोनुट् इत्यादौ न समुच्चयः। अये धीदरिद्र कौमुदी न त्वयाधीता समुच्चयेऽन्वाचयेच न समासोऽसामर्थ्यात् किन्तु अत्र समाहार एव ह्रस्वनद्यापोनुट्, एङ्ह्रस्वात्संबुद्धेरित्युभयत्रापि नपुंसकैकवचने पञ्चम्याः प्रयोगद्वयम्। ऊकालोज्झ्रस्वदीर्घप्लुत। इत्यत्र सौत्रं पुँस्त्वम्। बन्धुनि बहुव्रीहावित्यत्र शब्दस्वरूपपरे बन्धुशब्दस्य नित्यनपुंसकतामवधेहि। नहि मन्दजनवेद्यं पाणिन्यादीनामज्ञानम्, किन्तु अङ्गपारायणादौ तादृशपाठस्यैव धर्मजनकत्वमितिगृहाण। इदं सर्वं विद्वन्मात्रगम्यं कथं त्वया ज्ञातुं शक्यम् इति मौनमास्ताम्। एवमेव भरतमुनिकाव्यप्रकाशकारादिकृतिषु अपि आक्षेपा उन्मत्तप्रलापा एवेति समये विवरिष्यन्ते।

४५० पृष्ठे मन्दः श्रीहर्षमधिक्षिपन् जगन्नाथं स्तौति तदपि अस्याज्ञानविलसितमेव।

तथाहि असंष्ठुलतारूपवाक्यार्थसामान्यदोषं विवृण्यतोदाहृत्ता च जगन्नाथेन वाक्यार्थो हि गाढतरव्युत्पत्तिनिपुणीकृतान्तःकरणैः नानाविधपदार्थरचनापरिवृत्तिसमर्थैरेव कविभी रचितः कामपि कमनीयतामासाद्यते नेतरः तथाहि।

उपासनामेत्य पितुःस्म रज्यते दिने दिने सावसरेषु वन्दिनाम्
पठत्सु तेषु प्रति भूपतीनलं विनिद्ररोमाजनि शृण्वती नलम्

इत्यत्र द्वयोः क्रिययोरुद्देश्यविधेयभावेन गुणप्रधानभावमकुर्वता, वन्दिनः षष्ठ्यन्ततया सप्तम्यन्ततया च द्विः परामृशता कविना वाक्यार्थः क्रमेलकवदसंष्ठुलतां नीतः। यदि च स एव वाक्यार्थः प्रकारान्तरेण निर्मीयते यथा—

**उपासनार्थं पितुरागतापि सा निविष्टचित्ता वचनेषु वन्दिनाम्।**
**प्रशंसतां द्वारि महीपतीनलं विनिद्ररोमाजनि शृण्वती नलम्।**

एवं निर्माणे कामपि कमनीयतामावहेदिति सहृदयैराकलनीयम् इति रसगङ्गाधरकृत्।

अत्र वन्दिनामवसरेषु पितुरुपासनामेत्य या रज्यते रागवती सा तेषु प्रतिभूपतीन् पठत्सु स्तुवत्सु सत्सु नलं शृण्वती विनिद्ररोमाजनि इत्यन्वये क्व विसंष्ठुलता निर्माणस्य क्व वा वाक्यभेदः स्योनं ते सदनं कृणोमीत्यादाविव—पचति भवति, पश्य मृगो धावतीत्यादाविव चैकवाक्यतायाः समर्थनीयत्वात् इति चिन्त्यैवासंष्ठुलता पण्डितराजस्य। तथा वन्दिनः षष्ठ्यन्ततया सप्तम्यन्तया च द्विः परामर्शेपि न कापि बोधसामग्रीक्षतिरिति तटस्थैर्विचारणीयम्। अत्र भट्टः जगन्नाथपरिहृतां विसंष्ठुलतां व्याचष्टे यथा—निविष्टचित्ता इत्यादिपाठे पितुरुपासनार्थमागतानां द्वारि राजसामान्यं प्रशंसतां वन्दिनां वचस्सु निविष्टचित्ताम् (अये भट्ट इदं कस्यव्याख्यानं मूलकृत्तु उपासनार्थं पितुरागतापि सा इति वदति भवांस्तु पितुरुपासनार्थमागतानां वन्दिनामिति वदति किमत्रसम्यक् इति सुधियो जानन्तु। किंच भट्ट नहि निविष्टचित्तात्वमुद्देश्यतावच्छेदकम् किन्तु नलश्रवणमेव। विनिद्ररोमजनिं प्रति नलश्रवणस्यैव प्रयोजकत्वात्। असति बाधे सर्वत्रैवोद्देश्यविधेयभावस्थले धनवान्सुखीत्यादाविव प्रयोज्यप्रयोजकभावाभ्युपगमात् अतो निविष्टचित्तामुद्दिश्य विनिद्ररोमत्वं वर्णितमिति त्वदुक्तिः

रासभसंस्थानायमाना हासकरी केवलम्। किञ्च भट्ट नैषधीयपाठेऽपि क्रिययोरुद्देश्यविधेयभावेनान्वयस्य मया प्रदर्शितस्याङ्गीकरणे, न वाक्यभेदो न वा विसंष्ठुलतेत्यवधेहि। पश्यन्तु च सुधियः भट्टस्य रसगङ्गाधरव्याख्यानयोग्यतां पाण्डित्यञ्चेति शिवम्॥

अपरमपि वैदुष्यं निभालयन्तु सुधियः नागेशनिन्दकस्य।

रसगङ्गाधरस्य ६७० तमे पृष्ठे यथा—कपिकच्छ्वां (कौंछइतिख्यातायामौषध्यां) वृश्चिक इति नागेशटीका विवादैकपण्डितानां पदार्थज्ञानस्य सुन्दरं निदर्शनम् इतिब्रुवतः। अत्र कापेयीं प्लुतिमभस्यताऽनेन मुखभागेनैव पतितम्। तथाहि ओषध्यःफलपाकान्ता" इत्यमरमपि अजानता, वल्मीकोदरे कपिकच्छूं पश्यता मन्दचक्षुषा कपिकच्छू कौंछ इति ख्यातायामौषध्यामिति व्याख्यातम्। सा च कपिकच्छूर्नौषधी नाप्यौषधी किन्तु मूढकल्पनामात्रम्।

किञ्चात्रैव मारकतारूपातिशयप्रतिपादनेच्छया मारकतया प्रसिद्धेन सर्पेण सह वल्मीकोदरसंभूत इति विशेषणतया संसर्गस्योद्भावनमिति भट्टप्रलापः। अत्रावहिताः सुधियो निभालयन्तु—

"वल्मीकोदरसंभूतकपिकच्छूसहोदराः।
हा पीडयित्वा निघ्नन्ति सज्जनान् दुष्टदृष्टयः"।

अस्य व्याख्यानं जगन्नाथकृतं, कपिकच्छूसहोदरत्वेन मारकत्वं न प्राप्नोति अपितु पीडाजनकत्वमात्रम्। कवेस्तु पीडां जनयित्वा मारयन्तीत्येवंरूपोऽतिशयो विवक्षितः। अतो वल्मीकोदरसंभूतत्वं सर्पाधिकरणवृत्तितारूपम् कपिकच्छूविशेषणम् मारकतावच्छेदकतया स्वप्रतिभया कल्पितम् (इति रसगङ्गाधरः) अत्र वल्मीकोदरसंभूतत्वविशेषणेन कपिकच्छ्वामसतो मारकतावच्छेदकसंसर्गस्य स्वप्रतिभया कल्पनम् तादृशातिशयविवक्षयैवेति मूलग्रन्थदर्शनेन सतोऽसतो वा संसर्गस्योद्भावनम्। अत्रभट्टव्याख्यानम्—मारकता-

रूपातिशयप्रतिपादनेच्छया मारकतया प्रसिद्धेन सर्पेण सह वल्मीकोदरसंभूत इति विशेषणतया संसर्गस्योद्भावनम् इतिमञ्जुटीका। अये भट्ट नहि वल्मीकोदरसंभूतइतिविशेषणम् किन्तुवल्मीकोदरसंभूतत्वम्। किञ्च न मारकतारूपोऽतिशयः किन्तु मारकतारूपधर्मकृतोऽतिशयः। अतएवमूले किञ्चिद्धर्मकृतातिशयविवक्षयेतिप्रतिपादितम्। भट्ट यस्य ते मूलार्थोऽपि न सम्यगवगतः स कथं रसगङ्गाधरं व्याख्यासि अहो ते दुराग्रहः। किञ्च भट्ट त्वदर्थस्वीकारेऽपि कपिकच्छूलतायां पीडाजनकत्वं तत्पूर्वकमारकत्वमप्यप्रत्यक्षम् अतो विशेषणेनापि किं सेत्स्यति इति तव सकलोऽपि प्रयासः व्यर्थएव। नागेशव्याख्याने तु कपिकच्छूर्वृश्चिकः विछुवाघासइति लोकप्रसिद्धस्तत्र सर्वं युज्यते इतियुक्तं नागेशव्याख्यानम्। अस्तु वा गौणीवृत्या वृश्चिके प्रयोगस्तथापि न किञ्चिद्धीयते किन्तु भट्ट कौंछइतिख्यातायामौषध्यामिति यत्त्वया व्याख्यायते तत्तवकोशज्ञानस्य सुन्दरं निदर्शनम्। न तत्र कोऽप्यप्रमत्तः कौंछलतायामौषध्यामिति प्रयुञ्जीत। इति स्वं रूपं तावत् परिचिनु पश्चान्नागेशमाक्रोष्टासि। अपरञ्चालोकयन्तु सुधियो भट्टाक्रमणम्—

अयं भट्टः स्वाज्ञानेनैव नागेशमज्ञानिनं कल्पयति—तथाहि ५२२ तमे पृष्ठे श्लेषप्रकरणे श्लेषं लक्षयित्वा तं विभजति मूलकृत् तच्च द्वेधा अनेकधर्मपुरस्कारेण एकधर्मपुरस्कारेण च। आद्यं द्वेधा अनेकशब्दप्रतिभानद्वारा एकशब्दप्रतिभानद्वारा चेति त्रिविधः श्लेषः। तत्राद्यः सभङ्गः द्वितीयो ह्यभङ्ग इति वदन्ति इति। अत्र नागेश टीका—तत्र—आद्यभेदयोर्मध्ये। अत्र—एषां भेदानां मध्ये। आद्ये प्रकृतमात्राश्रिते। द्वितीये अप्रकृतमात्राश्रिते, तृतीयभेदे उभयाश्रिते इतिनागेशटीका। तामबुद्ध्वैवोपद्रवतोऽस्य पश्यत प्रज्ञाप्रकर्षम्। अयं भट्टः स्वयममुं ग्रन्थं व्याचष्टे तत्र द्वितीयभेदयोः ( अनेकशब्दप्रतिभानद्वारा एकशब्दप्रतिभानद्वाराचेति ) मध्ये

आद्यः ( अनेकशब्दप्रतिभान ) सभङ्गः ( एकशब्दप्रतिभान ) अभङ्ग पदवाच्यः । आद्यभेदयोः आद्यौ हि भेदौ अनेकधर्म-पुरस्कार एकधर्मपुर० ) मध्ये इति नागेशटीकातु अज्ञानमूलिका सभङ्गाभङ्गौ द्वावपि अनेक धर्मपुरस्कारेणैव भवतः यथा अभङ्गे करकलितचक्र इत्यत्र करकलितइत्याद्यानुपूर्व्या अनेकधर्म पुरस्कारेणार्थद्वयम् अहो धन्या टीका इत्यन्तं भट्टप्रलापः । अत्र प्रष्टव्यम् इदम् । अये भट्ट नागेशस्तु तत्रेति मूलं आद्यभेदयोर्मध्ये इति व्याचष्टे ( इयमेवनागेशपङ्क्तिः ) प्रलापी भट्टस्तु आद्यभेदयोः ( आद्यौहिभेदौ अतेकधर्मपुर० एक धर्मपुर० ) मध्ये इति नागेश-ग्रन्थं मिथ्यैवोद्धृत्य नागेशटीकातु अज्ञानमूलिका इति वदति । अये भट्ट नहित्वामृते पृथिव्यामन्यः कश्चिद्रसगङ्गाधरमर्मज्ञः आद्यभेदमनेकधर्मपुरस्कारैकधर्मपुरस्कारत्वेन विभजते । नागेशो-जगद्गुरुः कथमेवविभजेत् न च नागेशेनात्र किञ्चिदुक्तम् । स्वयमेव भवान् महदज्ञानं विभर्षि शिष्यांश्च तथा पाठयँस्तानपि नाशयसि अवहितो भूत्वा विचारय । मूलकार एव अनेकशब्द-प्रतिभानद्वारैकशब्दप्रतिभानद्वाराचेति आद्यं स्पष्टं विभजति तं पश्यन्नपि कश्चित्सुधीः कथं भवत इव प्रमाद्यति । अयंतु भवतः प्रमादोऽसमाधेय एव । नहि नागेशटीका अज्ञानमूलिका किन्तु निरुपमाज्ञानी भवान् । अये विपश्चितः श्लेषस्य त्रयो भेदाः ते च अनेकधर्मपुरष्कारेण एकधर्मपुरस्कारेण च । आद्यस्य अनेकधर्म पुरस्कारेण प्रवर्तमानस्य द्वौ भेदौ सभङ्गाभङ्गपदेन निर्दिष्टौ । नागेशेन तत्र पदेन सभङ्गाभङ्गौ मनसि निधाय आद्ययोर्भेदयोरिति व्याख्यातम् । अनेकधर्मपुरस्कारेण श्लेषस्य सभङ्गाभङ्गौ द्वौ भेदौ इति नागेशाशयस्त्वमन्यथयतोऽस्य सर्वः प्रलापः सुधियामुद्वेगजनकः । नहि नागेशः आद्यमनेकधर्मपुरस्कारेणैकधर्मपुस्कारेण चेति विभ-जति अयं तु प्रधानभेदः, इत्थं स्वाज्ञानेन नागेशमज्ञानिनं वदतः

शिरसि पततु विदुषां धिक्कृतिपविरित्यलम् अनयैव योग्यतया रसगङ्गाधरं व्याचक्षाणः प्रहरति। अये भट्ट—

चिकित्सा नैव लोकेस्मिन् धियस्ते इति निश्चिनु
प्रभवामि चिकित्सायां न ते पण्डितमानिन इति।

अथेदमपि आक्रमणं भट्टस्य परिशीलयन्तु सन्तः यदयं ४१६ तमे पृष्ठे भूमिकायां च ३६ पृष्ठे । पुरः पुरस्तादरिभूपतीनामिति पद्यस्य व्याख्याने नागेशमधिक्षिपन् स्ववैदुष्यपरिपाकं परिचाययति। तथाहि—

पुरः पुरस्तादरिभूपतीनां भवन्ति भूवल्लभ भस्मशेषाः।
अनन्तरं ते भ्रुकुटीटविङ्कात्स्फुरन्ति रोषानलविस्फुलिङ्गाः

इति पद्यं व्याचष्टे। अरिभूपतीनां पुरः नगर्य्यः भस्मावशेषाः भवन्तीत्यादि। स्पष्टोर्थः। किन्तु नागेशः पुरः पुरस्तादिति पूर्वं-पूर्वमिति वैयाकरणानां (भट्ट मद्विधानां वैयाकरणानामिति ब्रूहि) अतीवहास्यास्पदं द्विर्भावं प्रयुज्य श्लोकमेवासङ्गतं चकार। अये विद्वन्मन्य नागेशस्य पूर्वं पूर्वं मिति द्विःप्रयोगं न कोऽपि मूर्खं विनोपहसेत्। यं च भवान् द्विःप्रयोगं मनुते सोऽपि तवावैयाकरणतामुद्घोषयन् त्वामेवोच्चैर्हसति। अवैयाकरण भट्ट पूर्वं पूर्वमिति नागेशव्याख्याने भ्रान्तोऽसि। अये भट्ट पुरः पुरस्तादिति न द्विः प्रयोगो नवा नागेशो द्विः प्रयोगं मनुते द्विःप्रयोगकल्पना तु तवैव। पुरः पुरस्तादिति अस्यन्तास्तात्यन्तयोः सह प्रयोगः अभिन्नार्थाविमौ प्रत्ययौ तत्रैवं विवरणं पूर्वं पूर्वमिति। द्विर्भाव इत्यस्य एकस्य पदस्य द्विरुच्चारणमर्थः कोहि अप्रमत्तोऽत्र द्विर्भावं शङ्केदपि उद्भट-वैयाकरणं त्वामृते। पूर्वं पूर्वमिति द्वयोःसमानार्थकयोः पदयोः विवरणम् अवधेहि। इदानीमागता ते प्रकृतिं प्रज्ञा। यदि नागता

तदा कमपि व्युत्पन्नं वैयाकरणमुपसीद संशयं ते भेत्ता। किंच यदग्रे प्रलपसि भस्मशेषा इति बहुव्रीहिसमाश्रयणे अरिभूपतीनामिति षष्ठीविभक्तेरनन्वयः। (अयिभट्ट अरिभूपतीनामिति नायं षष्ठीविभक्तिः किन्तुषष्ठ्यन्तं पदम्, अनयैव योग्यतया नागेशं पराकर्तुं प्रस्थितः, यदुनन्दन एव रसगङ्गाधरं रक्षतु तव हस्तपतितम्) तदाहि अरिभूपतयः इति प्रथमा योग्या। (अये चपल अवैयाकरणप्रथमान्तं योग्यमिति प्रयोज्यम्) बहुव्रीहिसमासरूपं व्याख्यानं मन्दकल्पितं विहाय मार्गमागच्छति भट्टः। शत्रूणां राज्ञां भस्मशेषाः भवन्तीति तत्कृतव्याख्यानेऽपि राज्ञामिति षष्ठ्याः शेषा इत्यत्रान्वये (अयि अन्वयमर्यादानभिज्ञ नहि षष्ठ्याः शेषा इत्यत्रान्वयः किन्तु षष्ठ्यर्थस्येत्यादि वाच्यम्) शेषा इत्यस्योद्देश्यसमर्पकत्वे राज्ञां शेषा कीदृशा भवन्तीति विधेयसमर्पकपदाभावात् वाक्यार्थोऽनिष्पत्तिः (अये शाब्दनयमन्दशिशो राज्ञां शेषाः कीदृशा भवन्तीति विधेयसमर्पकपदाभावादिति जल्पतस्ते भवन्तीत्यन्तं विधेय समर्पकमित्यभिप्रायः! यदि न तदा कथमीदृशीं पदपङ्क्तिं निदधासि। एवं प्रलपतस्ते पदपङ्क्तिर्दिव्यवर्षसहस्रेणापि न समालोचनान्तं गच्छेदिति प्रकृतमनुसरामि। अयि विधेयाऽनभिज्ञ प्रकृते भस्मशेषेषु अरिभूपतिसम्बन्ध एव विधेयः, यथा देवदत्तस्य गौरित्यत्र गवि देवदत्तस्य सम्बन्धः, एवञ्च तव दोषकल्पनापि समाहितातोनागेशव्याख्यैव विदुषां श्रद्धाभाजनम् किं तवायोग्यप्रलापेन। किञ्चाग्रे भट्टः नागेशं पराकरोति किञ्चे त्यादिना तथाहि किञ्च सर्वस्य द्वे इति सूत्रेण पुरः पुरः पुरस्तात्पुरस्तादिति वा द्विर्भावो युक्तः (अयेऽवैयाकरण नहि सर्वस्यद्वे इतिद्विर्भावविधायकं किन्तु अधिकारसूत्रम्। कथं-कृत्वा वा रासभध्वनिमिति न्यायेन नागेशं विजेतुं प्रस्थितोऽसि अहो ते धाष्टर्यं क्षाम्यन्तु विद्वांसः। अये भट्ट नायं द्विर्भावः किन्तु अस्यन्तास्त्यन्तयोः सह प्रयोग इति पूर्वोक्तं

स्मर। अयि भट्ट तव व्याख्याने पुरः भस्मशेषा जाता इत्येवं रूपे तवाक्रमणात्पूर्वमेव तवारिनृपतयः स्वपुरं भस्मसात्कृत्वा प्रपलायिता इत्येवमर्थमभिप्रेतः। सच न सभवति नच युज्यते च। स्वहस्तेनैव शत्रोराक्रमणं संभाव्यैव अरिभूपतयः स्वपुरं दहन्तीति। इतिहासपुराणेष्वपि नोपलभ्यते न संभाव्यते न युज्यते च इति अश्रुतपूर्वैव ते कल्पना। धन्या ते प्रज्ञा यया इदृगर्थः कल्प्यते अहो। किंच भ्रुकुटीविटङ्कात् इत्यस्य व्याख्यानं विटङ्कमिव विटङ्कमुन्नतप्रदेशस्तस्मादिति। अये सुधीशिरोमणे केनात्र समासः। उपमितमित्यादिसूत्रेणेति ते बुद्धिस्तदा रोषानलविस्फुलिङ्गस्फुरणरूपसाधारणधर्मस्य प्रयोगे कथं स स्यात् सामान्याप्रयोगे इति पर्युदासात्। भवतु वा अस्य दोषस्य यथा कथञ्चित्परिमार्जनम् उत्तरपदलक्षणादोषस्य क समाधिरिति कौमुदीं तावत्पठ पाश्चान्नागेशं विजेष्यसि अत्र रूपकमेव नोपमेति भ्रुकुट्येव विटङ्कमिति विग्रहं गृहाण। अहो अयं घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहो दृष्टिपथमुपगतः इति।

यत्ते—तस्मादेवंविधं व्याख्यानं व्याख्यातुः साहित्यसौधे हठाक्रमणमिव पिशुनयतीति वचनं तत्ते निस्त्रपस्यैव शोभते अद्यापि मर्मप्रकाशाभावे रसगङ्गाधरस्य या गतिर्भवित्री तां द्वित्रा एव विद्वांसोऽनुभवन्ति। तव सरलातु रसगङ्गाधरस्य पामायमानोद्वेगकरी एव इति निश्चिनु। अयि भट्ट एतादृशी शङ्का तवपरम्परायाता भवदुपज्ञमेवेति वा न विमृशामि। इमां तव कापेयीं प्लुतिं दृष्ट्वा हसन्ति व्युत्पन्नाः।

इदमपरमाक्रमणम् भट्टस्य ३०९ तमे पृष्ठे प्राचीसन्ध्येत्यादिपद्ये परम्परितमालारूपकोदाहरणे "इह तु नयनशोणिम्नि ज्वालाद्यारोपोऽनलसमारोपं नियमेनापेक्षते" इति मूलस्य मर्मप्रकाशे अनलसमारोपमिति प्रतीकमुपादाय राज्ञीति शेष इति नागेश

व्याख्यानमाक्षिपन् भ्रमोऽयं नागेशस्य क्रोधे इति वाच्यम् इति व्याहरति भट्टः, तथा अस्य पद्यस्य तृतीयपादं व्याचक्षाणः—कान्तापादलाक्षारसानामाज्ञा। तवनयनयोः शोणता लाक्षारसानामाज्ञेव शोणतासंपादयित्री इत्याशय इत्यन्तं प्रलपति मन्दः। जरद्गवः कम्वलपादुकाभ्यामित्यादिपद्यसोदर्य्येणानेन टीकाकृद्वाक्येन किं विवक्षितम्। किमत्रनयनयोः शोणतामुद्दिश्य कान्तापादलाक्षारसानामाज्ञात्वं विधीयते उत तद्विपरीतम्। अथ लाक्षारसानामाज्ञा इव का सा या तदाज्ञात्वं प्राप्य शोणतां संपादयित्री कस्य शोणतां संपादयित्रीति आशय व्याख्यानेनापि दुरिस्थतिरेवाशयस्य चतुर्वेदा एवामुमाशयं जानन्ति यैः सरला प्रशंसिता। विज्ञाः श्लोकार्थमविज्ञायैव व्याख्यातुं प्रवृत्तः प्रलपति भट्टः। अतः प्रलापत्वादुपेक्ष्यैव सरला। इदमत्र व्याख्यानम्। तव नयनयोः शोणिमानं ज्ञात्वैव विपक्षभूपरमण्यः पादयोर्लाक्षालङ्करणं तत्यजुः, अत इयं ते नयनयोः शोणता तादृशानां लाक्षारसानामाज्ञेवेति। अत्रैव यद्यपि सावयवेऽप्यारोपे आरोपान्तरस्योपाय इतिपाठं निश्चित्य व्याख्यातुं प्रवृत्तस्य अद्य वैदुष्यसूचकं व्याख्यानं बिवेचयन्तु सुधियः। तथाहि सावयवे रूपके आरोपे एकस्मिन् आरोपे सति द्वितीयस्य आरोपस्य उपायो भवति (क उपायो भवति भवान् अन्यो वा तव सयूथ्यः तथासति कथमारोपो भवति हस्ते गृहीत्वा सर्वाङ्गेषु गृहीत्वा वा न किमपि सम्भवति। अस्तुप्रलापालोचनम्। अत्रायं निष्कर्षः ग्रन्थस्य। सावयवेऽपि रूपके एकस्य रूपकस्य आरोपान्तरे उपायता संपद्यते। अत्रायं मूलपाठः सावयवेऽपि आरोपे आरोपान्तरमस्योपाय इति। तमबुद्ध्वैव व्याख्यातुं प्रवृत्तस्य कागतिरिति विज्ञा एव जानन्तु। इदृक् शोधनं व्याख्यानं च अस्य ग्रन्थस्य जातं यत्र द्वयोर्महानभिनिवेशः। किञ्च साहित्यमर्मज्ञेन भ्रमोयं नागेशस्य क्रोधे इति वाच्यम् इति यदुत्प्रवनं

तद्वतीवोपेक्ष्यम् । परम्परितरूपके एतावदेव आलोच्यम् यदेकस्य रूपकस्य रूपकान्तरे उपायतेति तदत्र नयनयोः शोणिम्नि ज्वालारोपणे क्रोधे ऽनलारोपो राज्ञिवा अनलारोपोऽस्तु नात्र कश्चिद्विशेष इति मन्वानैः नागेशैः शिष्यबुद्धिवैशद्यार्थम् तथा व्याख्यातम् इति भावुकैरेव विभावनीयम् नात्र मूर्खोऽधिकरोतीति । किञ्च क्रोधेऽनल समारोपे सादृश्यगवेषणं प्रयत्नसाध्यम् राज्ञि अनलसमारोपे तेजस्वित्वेनैव सादृश्यम् अमूर्तस्य क्रोधस्य गुणरूपस्य तेजस्वित्वादिता असम्भविनी । राज्ञस्तु लोकप्रसिद्धा तथा च राज्ञि एवानलारोपः समुचित इति नागेशस्य निगूढाशयो मन्दैर्दुर्विभाव्य इत्यलम् । त्वया तु—

न पादपोन्मूलशक्ति रंहः शिलोच्चये मूर्छतिमारुतस्येति

कविस्मृतिः सदा भट्ट स्मर्तव्येति शिवम् । आगता ते प्रकृतिं प्रज्ञा ! ३४४ पृ० अथायमपरो मन्दाक्षेपः परिह्रियते । साम्राज्यलक्ष्मीरियमृष्यकेतोः इत्यत्र (भट्ट इतिपरनिर्देशे केन विसर्गोऽहोसन्धिज्ञानं भट्टस्य) ब्रह्मसूर्ऋष्यकेतुः स्यादिति कामदेवार्थबोधकोऽमरकोशः सुप्रसिद्धः । अये भट्ट कामदेवार्थबोधकोमरकोशःऋष्यकेतुर्वा प्रमाद्यसि प्रकृतिस्थो वासि धन्यस्ते कोषपरिचयः) किन्तु नागेशो व्याख्याति ऋष्यकेतोश्चन्द्रस्येति । ऋष्यपदस्य कोषान्तरात्कुरङ्गरूपार्थबोधनेऽपि स्पष्टमस्वारस्यम् । सहृदयसम्प्रदाये स्मर एव कामिनां सम्राट् समीर्य्यते सुरभिसुधाकरयोस्तु सचिवतैव समीक्षिता समुचिता चेत्यन्तो भट्टाक्षेपः भूमिकायाः ३८ तमे पृष्ठे । अये नागेशध्रुक् यदिकोषान्तरादृष्यशब्दस्य ( नहि कोषान्तरात् अमरादेव भट्ट ) कुरङ्गार्थतायाम् ऋष्यकेतुशब्दस्य चन्द्रार्थतां मन्द मन्दमङ्गीकुरुषे तदा सहृदयसमाजे सचिवतैवास्तु चन्द्रस्य न तया किञ्चित्परिहीयते सचिवानामपि साम्राज्यलक्ष्मीरुदैदुदेति उदेष्यति चेति कथमत्र

मन्दमोहः। यत्तु सहृदयसमाज इति कथनं तदधुनाप्यसिद्धम्। प्रत्युत चन्द्रः ब्राह्मणानां राजेति। वैदिकप्रसिद्धेः महेश्वरेणापि सह परिवारं शिरसा वहनाच्च। अये भट्ट कस्येदं सौभाग्यं लोके वेदे वा समुपलभ्यते। प्रत्युतानङ्गस्य का साम्राज्यशोभा यया इयं रूप्येत्। मन्दभट्ट कथं मत्तइव सचिवतैवेत्यन्तं प्रलपन्न विलज्जसे। किंच सरलायामामूलाग्रं दूषितायां यत्प्रलपसि यद्धरिणवाहनं चन्द्रं प्रचारयद्भिः पञ्चाङ्गचित्रैर्व्यामोहितोयं नागेशमहाभागो यत् वृषकेतुरिव ऋष्यकेतुश्चन्द्रश्चित्रित इति। अये स्वतन्त्र नहिनागेश-काले पञ्चाङ्गेषु चन्द्रादिचित्राणि प्राकाश्यन्त येन मूढो नागेश इयन्तु मन्दस्यैव जल्पना कल्पना चेति। किञ्च ऋष्यशब्दस्य कुरङ्गा-र्थत्वे कथं न चन्द्रव्याख्या ज्यायसी केतुशब्दस्य चिह्नार्थत्वात् यथा मीनकेतुः कामएव मीनस्य तच्चिन्हत्वात् एवमृष्यस्य तच्चिन्हत्वात् ऋष्यकेतुश्चन्द्रो भवितुमर्हति। किञ्चात्र ससंदेहलक्षणं संगमयता जगन्नाथेन पर्य्यायेणोभयकोट्यालम्बनतया दोलासादृश्यात् संश-योत्र दोलाशब्देन लक्ष्यते इत्युक्तम् तच्चिन्त्यतां परिजिहीर्षुणा नागे-शेन व्याख्यातम्। आलम्बनतया एतद्रूपधर्मेणेति, तदनवबुद्ध्यैव मन्देन व्याख्यातम्–एकदा साम्राज्वलक्ष्मीरित्यूह्यते पुनस्तं पक्षं परित्यज्य सौन्दर्याधिदेवतेति वितर्क्यते इति अहो भट्टस्य शास्त्र-श्रमः। पश्यन्तु सुधियो ऽस्य नग्ननृत्यम् नहि ज्ञानद्वयम् संशयः किन्तु विरुद्धनानाधर्मप्रकारकैकधर्मिकमेकं ज्ञानम्, भट्टव्याख्याने तु ज्ञानद्वयं निर्दिश्यते (एकदेति तं पक्षं परित्यज्य ऊह्यते तर्क्यंत इत्यादि पदैरिति, किमत्र अस्य योग्यतापरिचये ऽवशिष्टम्, इति ब्रह्मापि तं नरं न रञ्जयतीति प्राचामुक्तिं विचार्य्य विरम्यते इति। अये भट्ट आगता ते प्रकृतिं प्रज्ञा तदा स्वाक्षेपं परिहर। विज्ञाः पर्य्यायेणोभयकोट्यालम्बनतया दोलासादृश्यात्संशयोऽत्र दोला-शब्देन लक्ष्यते, अस्य मूलस्य भट्टव्याख्या एकदा साम्राज्यलक्ष्मी

रित्यूह्यते पुनस्तं पक्षं परित्यज्य सौन्दर्य्याधिदेवतेति वितर्क्यते इत्याशयः। अहो संशयलक्षणव्याख्या भट्टस्य योग्यतानिकषोपलम् इति शिवम्। किञ्चात्रैवप्रकरणे ३४५ तमे—पृष्ठे।

"आज्ञा सुमेषोरविलङ्घनीया किं वा तदीया नवचापयष्टिः।
वनस्थिता किं वनदेवता वा शकुन्तला वा मुनिकन्यकेयम्॥"

इतिपद्ये ध्वनिव्यपदेशं वारयता जगन्नाथेन (यद्यप्यत्रापि वाचकशब्दाभावाद्व्यङ्ग्य एव भवितुमर्हति संशयस्तथापि विषय-निरूपणेन स्फुटमावेदितत्त्वान्न ध्वनिव्यपदेशस्य हेतुरित्युक्तम् मूले।

अत्र भट्टो विमर्शवाचकशब्दाभावोऽत्र विमर्शनीयो मार्मिकाणाम् इति रसगङ्गाधरमाक्षिपति मन्दः स्वातन्त्र्यात् निरङ्कुशत्वात्तुण्डस्य। इयं शकुन्तलास्ति किंवा आज्ञा किंवा चापयष्टिः इत्युक्तौ सन्देहस्य स्फुटं वाच्यत्वादिति। (भट्ट अत्र केन वाचकशब्देन संशयस्य स्फुटं वाच्यता। वा शब्देन शकुन्तलादिशब्देन वा तेषां संशयाशक्तेः।) यदि उदाहरणपद्यवत् संशयादिशब्दै रेवोक्तौ संशयस्य वाच्यत्वमिति पण्डितराजाशयस्तदापि विचारावसरः। किं तारुण्यतरोरियं रसभरोद्भिन्ना नवा मञ्जरीत्यादौ सर्वैं रेव ससन्देहत्वमङ्गीकृतम् संशयसंदेहादिव्यपदेशाभावेऽपि अस्याः सर्गविधौ इतिपद्ये प्रकाशेन प्रोक्तः सन्देहः पण्डितराजेनापि सोत्साहं समर्थितः इति पण्डितराजं विमर्शयन्नाक्षिपति भट्टः। पश्यन्तु अस्याविवेकम् उदाहृतपद्ये जगन्नाथः न सन्देहं निराचष्टे किन्तु तस्य ध्वनित्वम्। किं तारुण्यतरोरित्यादिपद्येऽपि सन्देहध्वनित्वमेव प्रकाशकृदभि-प्रेतम् तथाच क्व विमर्शनम्। एष स्वभावोऽस्य भट्टस्यानवसरे एवायं स्वप्रदर्शीति।

किञ्चात्रत्यां सरलां कर्णे कृत्वा ग्रन्थव्याख्यातुर्योग्यताञ्च परि-चिन्वन्तु। तथाहि—संशयध्वन्युदाहरणे—

तीरे तरुण्या वदनं सहासं नीरे सरोजञ्च मिलद्विकाशम् ।
अलोक्य धावत्युभयत्र मुग्धा मरन्दलुब्धालिकिशोरमाला ।

इतिपद्ये कमलधर्मिकोऽभेदेन संसर्गेण पुरोवर्तिव्यक्तिद्वय-प्रकारकः कमलमिदमिदंवेति भ्रमरगतः संशयो व्यङ्ग्यः । नच कमलाभेदबुद्धेर्भ्रमरप्रवृत्त्युपायतयापेक्षणादिदंपदार्थाभेदबुद्धिर्निरर्थिकेति वाच्यम् । एकपदार्थधर्मिकापरपदार्थभेदबुद्धेरपरपदार्थ-धर्मिकैकपदार्थाभेदप्रयोजकत्वेन कमलाभेदबोधसाम्राज्यात् । कमलत्वमेतद्वृत्ति तद्वृत्तिवेति संशयाकारः । सोयं संशयध्वनिरिति जगन्नाथः । अमुं ग्रन्थं व्याचष्टे भट्टः—पुरोवर्ति व्यक्तिद्वयम् ( वदन—सरोजरूपम् ) दृष्ट्वा—अभेदसंसर्गेण इदंकमलम् अथवा इदम् इत्याकारात् ( भट्ट इदं पञ्चम्यन्तं कुत्रान्वेति प्रकारत्वादिति उत्तरेण तथाचेत्याकारात्प्रकारत्वात् संशय इति वाक्यनिष्पत्तिः अहो व्याख्यानसौष्ठवं सुधीजनहृद्यम् ते । किञ्च भट्ट जगन्नाथः कमलधर्मिकम्पुरोवर्तिद्वयप्रकारकं संशयं निर्दिशति, भवान् कथं पुरोवर्तिधर्मिकम् अभेदेन कमलप्रकारकं व्याचष्टे, भवन्निर्दिष्ट वाक्येन तु पुरोवर्त्तिधर्मिकः कमलप्रकारकः संशयः प्रतीयते । किञ्च इदं कमलम् अथवा इदम् इति भवद्वाक्येन तु इदंधर्मिकः कमल-प्रकारकः संशयः प्रतीयते अश्रुतपूर्वोयम् संशयाकारः अनेन रसगङ्गाधरग्रन्थिभेदनस्य दुराशामात्रम् । ) कमलरूपे एकस्मिन् धर्मिणि इदंवा इदंवेति व्यक्तिद्वयस्य प्रकारत्वात् संशयः ( भट्ट इदं कमलमथवा इदम् इति भवन्निर्दिष्टवाक्ये नहि कमलं धर्मि किन्तु पुरोवर्ति इदंपदनिवेद्यमिति गृहाण । यदि मयि अश्रद्धा तदा अपरं कमपि पृच्छ । रसगङ्गाधरं व्याख्यासि नाशयसि वा कमलधर्मिकपुरोवर्तिद्वयप्रकारकसंशयस्य आकारस्तु जगन्नाथेनैव निर्दिष्टः स त्वया कथं परित्यक्तः । जगन्नाथः कमलमिदं मिदंवेति

निर्दिशति भवांस्तु इदं कमलमथवा इदम्। इति निर्दिशन् कथं न विभेषि त्रपसे वेति।) इदंमिदंवेत्यस्याशद्ववेद्यत्वाच्च व्यङ्ग्यत्व-मित्यर्थः। (अये भट्ट अस्य ध्वनित्वं संशयवाचक पदाभावान्नतु इदं वा इदं वैत्यस्याशद्ववेद्यत्वादिति। अतएव "आज्ञा सुमेषोरविल ङ्घनीयेत्यादिपद्यस्य ध्वनित्वं निराकुर्वता जगन्नाथेन यद्यप्यत्र वाचकशद्वाभावाद्व्यङ्ग्य एव भवितुमर्हति संशय इत्युज्जगार। किञ्च शङ्कासमाधानयो रिदं विशदीकरणमिति भट्टोद्वारः "ननु इदंपदार्थे कमलाभेद एव साधनीयो नतु कमले इदंपदार्थाभेदः"। भट्ट किं प्रलपसि इदं पदार्थे पुरोवर्तिनि कमले कमलाभेदः सिद्ध एव कथं साधनीयः किञ्च। कमलेऽपि इदंपदार्थाभेदोऽपि सिद्ध एव तदा तव प्रलापस्य कोह्यर्थः। किञ्च भट्ट यतोहि कमलाभिन्नं दृष्ट्वैव भ्रमरः प्रवर्तते अतः कमलाभेद एव भ्रमरस्य प्रवृत्तौकारणम् इदं पदार्थाभेदस्तु भ्रमरार्थं निरर्थकः इति भट्टः। (किं भट्ट कमला-भेददर्शनं भ्रमरप्रवृत्युपयोगीति मनुषे तदा कमलाभेददर्शनं कथं भवेत्। भट्ट कमलज्ञानमेव भ्रमरप्रवृत्तौ कारणमिति वाच्यम्। तच्च कमलत्वेन कमलोपस्थितौ सिद्धमेव इति। सर्वमेव ते व्याख्यानम् रसगङ्गाधराङ्गमोटनमेवेत्यवधेहि। किञ्च भ्रमरार्थं निरर्थक इत्यस्य किं तात्पर्य्यम् किमर्थशद्वस्य प्रयोजनार्थकता तदा भ्रमरप्रयोजनं निर-र्थकमिति स्यात् तदा स्पष्टं प्रलापः। अन्यथापि प्रलाप एव। अतोऽत्र एवं वाच्यम् इतरपदार्थाभेदज्ञानम् भ्रमरप्रवृत्तौ अनुपयोगीति। भट्टः समाधिं विशदयति। अभेदो हि द्विसंवद्धः। (भट्ट यदि द्विसंवद्धस्तदा कथमभेदः नहि द्वयोरभेदः) (अतएव कमले यदा इदंपदार्थाभेदः साध्यते तदा भ्रमरप्रवृत्तिप्रयोजकः। (नहि भट्ट[१] साध्यमानो कमलधर्मिक इतरपदार्थाभेदः भ्रमरप्रवृत्तिप्रयोजकः नहि भ्रमर इदं पदार्थाभेदं बुद्धा प्रवर्तते किन्तु कमलं बुद्धा। भ्रमर-प्रवृत्तौ कमलज्ञानस्यैव कारणत्वात्। अतएव जगन्नाथः कमलत्व-

मेतद्वृत्ति तद्वृत्तिवेति निरदिक्षत्, तं कथं न पश्यसि विजानासि वा। ( यदि कमले इदंपदार्थाभेदः प्रवृत्तावुपञ्ज्येत तदा वाढं कमले इदंपदार्थाभेदघटितमेव संशयं निरदेक्ष्यत् )। इदंपदार्थे कमला-भेदोऽपि स्वतः फलतीति तत्समाधानमिति, त्वत्समाधानेन को हि भवत्परः समाधाने व्युत्पद्येत्। पश्यन्तु सहृदयाः रसगङ्गाधरस्य भट्टप्रापितां दयनीयां दशामिति। एवं रसगङ्गाधरग्रन्थिभेदनव्याजेन रसगङ्गाधरं नाशयति भट्टः। को हि विद्वान् इममवेक्ष्य रसगङ्गा-धरनाशं न शङ्केतेति, शिवस्त्राता रसगङ्गाधरस्य। भट्ट अत्र तव प्रज्ञा किमुत्तरं प्रतिपद्यते। नागेशो हठात्साहित्यवलभीमाक्रामति भवान् वेति विज्ञा एव जानन्तु। हा धृष्टते निन्द्यासि।

अयमत्र समालोचकविमर्शः—

न कोप्येतावन्तं समयमजनिष्टात्र सुकृती
य उद्धर्ता ग्रन्थैः प्रभवतु जगन्नाथवचसाम्॥
भवन्तं भट्टाद्य प्रखरधिषणं प्रेक्ष्य जनता
महामोदं धत्ते निधिमिव पुरो दीनजनेति॥शिवम्॥

अपरञ्च सरलाजनकस्य व्याख्यानप्रागल्भ्यं नागेशनिन्दाकौश-लञ्चाकलयन्तु सुधियः। १६९ तमे पृष्ठे निर्भिद्य क्ष्मारुहाणामति-घनमुदरमितिपद्यटीकायां......अतिदीर्घस्वर्णदण्डभ्रमेण संभृत-मानसाः ( शुकशिशवः ) पादान् स्वचरणान् धातुमिच्छन्ति अतिनिविडवृक्षरन्ध्रं प्रविश्य भूमौ गतान् ( पश्यत विद्वांसः गोत्रां गतेषु इत्यस्य व्याख्यानं भूमौ गतान् इति अयं भट्टः कर्मणि सप्तमीं प्रयुङ्क्ते )......अति दीर्घान् स्वर्णदण्डान् भ्रांत्वा...अवस्थानार्थं पादान् धातुमिच्छन्ति इति व्यवृणोत्। अनन्तरं च अत्र गुणविवे-किनां मनुष्याणां का कथा भ्रान्तिमतां तिरश्चामपि एवमानन्दं भानुमान् जनयतीत्युक्तौ अपि पदस्वारस्यात् अञ्चत्तिच इति च पदोक्त्या शुकशिशव इति शिशुपदेन ( मन्द नहि अत्र शिशुपदम्

किन्तु शिशव इति पदम्। भवतु किमपि नहि ते अव्युत्पन्नस्य इयान् विवेकः ततः किं तव शिक्षणेन । ज्ञानलवदुर्विदग्धं ब्रह्मापि तं नरं नरञ्जयतीति स्मृत्वा सन्तोष्टव्यम् ) भ्रान्तिपात्रता संघटनौचित्येन च तिरश्चामेवानन्दः स्पष्टमुपनिबद्धः कविना इत्यत्र प्रललाप च। ततः साहित्यमार्मिको नागेशमहोदयस्तु वृक्षनिर्गतरविकिरणेषु ( साहित्यमार्मिक पण्डितंमन्य भट्ट नहि वृक्षनिर्गता रविकराः किन्तु रवेर्निर्गता वृक्षाणामतिघनमुदरं निर्भिद्य गोत्रां गता इति कविना निबद्धम् तदनादृत्यानालोच्यैव च वृक्षनिर्गता इति निबध्नता भवता स्वव्याख्यानयोग्यतैव निवेदिता ) स्वर्णदण्डभ्रमं जनानामेवाह ( साहित्यमर्मज्ञ नहि शुकानां तच्छिशूनामन्येषामपि केषां तिरश्चां स्वर्णत्वविषयिका भ्रान्तिः श्रुता क्वाप्युपलब्धा वा ऋते मन्दधियः अतो नागेशस्तेषां तद्भ्रान्तिं न व्याचष्ट ।) ते (जनाः) च पादान् किरणान् धित्सन्ति धर्तुं मिच्छन्ति इति व्याचष्टे (मन्द व्याकरणानभिज्ञ नागेशोव्याचक्षे इति प्रयोज्यम् न हिनागेशव्याख्यानं वर्तमानकालिकम् भवतु एतदपि तव व्याकरणानभिज्ञतापरिचायकम् । ) धाधातोर्ग्रहणे न क्वचित्प्रयोग इति चिन्त्य एवायमर्थः ( मन्दधिषण भट्ट नार्थश्चिन्त्यः किन्तु त्वमतीव चिन्त्यः शोच्यश्च । साहित्यमार्मिकत्वेन नागेशमुपहसन् साहित्यानभिज्ञतामात्मीयां परिचाययसि । भानुमिश्रः रसमञ्जरीमङ्गलाचरणे एव 'अन्तः प्रेमभरालसां प्रियतमामङ्के दधानो हरः। इत्यत्र दधातिं धारणे प्रायुंक्त । माघोऽपि 'दधानमम्भोरुहकेशरद्युतीरित्यादि च प्रायुंक्त । जगन्नाथोऽपि सिंहानां च सुखेन मूर्धसु पदं धास्यन्ति शालावृका इति प्रायुंक्त । अन्येऽपि सन्ति बहुशः प्रयोगाःकविनिबन्धेषु इत्यलमज्ञप्रबोधनेन यतः मान्यैः 'नतु प्रतिनिविष्टमूर्खजनचित्तमाराधयेदित्यनेन निषिद्धंयमर्थः ) किरणान् इति यदि मुद्रणदोषः स्यात् किन्तु ते जनाः तेषु स्वर्णदण्डेषु पादान् चरणान् स्थापयितुमिच्छन्ति इति

नागेशस्याशयः स्यात्तदा मार्गे गच्छतां पुरुषाणामकाण्डे एव स्वर्णदण्डभ्रान्तिस्ततोऽपि मार्गगमनं परित्यज्य तदुपरि पादप्रक्षेपः कीलोत्पाटितामेव तेषां पिशुनयतीति किं वा वक्तव्यं विचारशीलेषु। (साहित्यमर्मज्ञंमन्य भट्ट मार्गे गच्छतामेव पुंसां शुक्राविदं रजनमिति भ्रान्तिर्भवति ततः मार्गगमनं परित्यज्य तदुपरि पादं प्रक्षिपन्ति नायं कीलोत्पाटितां तेषां पिशुनयति किन्तु तवैव कीलोत्पाटितां परिचाययन् व्याख्यानायोग्यतां परिचाययतीति बोध्यम्। यच्च मन्दोक्तम् शावका इत्यादिप्रयोक्तव्ये शुकबालका इत्यादिप्रयोगोऽपि व्याकरणफक्किकाऽभ्यासिनोऽस्य साहित्याक्रमणपराक्रमं प्रकाशयतीत्यलम् इति तन्निन्दारोगग्रस्तस्य भट्टस्य प्रलापत्वादुपेक्ष्यम्। व्याख्यातृनियमानभिज्ञ शिशुभट्ट लोकप्रसिद्धार्थैरेव पदैष्टीकाकृतः व्याख्येयं व्याचक्षते नतु अप्रसिद्धार्थैस्तथासति मघवा इत्यस्य विवरणं विडौजा इत्येवं लोका उपहसन्ति त्वदभिप्रेतशावकपदेन विवरणे उपहसनीयतामात्मनो मन्वानो न तथाऽकरोत् इति सन्तोष्टव्यम्। किञ्च शुकशावका इति व्याख्यानं विरुद्धमतिकृत्त्वेन तव साहित्यानभिज्ञतां बोधयन्नमङ्गलं जुगुप्सां स्मारयत् तवैवोचितमिति गृहाण) सुधियोऽवहिताः शृण्वन्तु

निर्भिद्यक्ष्मारुहाणामतिघनमुदरं येषु गोत्रां गतेषु
द्राघिष्ठस्वर्णदण्डभ्रमभृतमनसो हन्त धित्सन्ति पादान्
यैः संभिन्ने दलाग्रप्रचलहिमकणे दाडिमीबीजबुद्ध्या
चञ्चूचाञ्चल्यमञ्चन्ति च शुकशिशवस्तेऽशवः पान्तु भानोः।

'अत्र भ्रान्तिभृतां तिरश्चामप्येवमानन्दं जनयतीति जगदानन्दहेतुर्भगवानिति व्यज्यते इति रसगङ्गाधरः, अस्य व्याख्याने एव उत्प्लवता कविपुङ्गवेन नानाविधविशेषणैर्नागेश आक्रुष्टः अत्र

नागेशेन रविरक्तकिरणेषु द्राघिष्ठस्वर्णदण्डभ्रान्तिः मनुष्येषु व्याख्याता, साहित्यमर्मज्ञेन सरला पित्रा तु शुकशिशुषु व्याख्याता तत्रापिपदस्वारस्यचपदोक्तिशिशुपदलब्धभ्रान्तिपत्रतौचित्यानि कारणानि निबद्धानि। तेषु अपिपदस्वारस्यस्य इयं स्थितिः, भ्रान्ति भृतामितिविशेषणेन तिरश्चामपीत्यपिना चातिरश्चां मनुष्याणां भ्रान्तिः स्फुटं प्रतीयते येऽतिर्यञ्चो मनुष्याः तेषामपि स्वर्णदण्डभ्रान्तिमुत्पाद्य आनन्दं जनयतीति जगदानन्दहेतुभगवानिति निबद्धम् यदि शुकशिशूनामेव भ्रान्तिजननद्वारा आनन्दहेतुः स्यात् तदा शुकशिशूनामानन्दहेतुर्भगवानित्येवं निबध्येत। रसगङ्गाधरकारेण तु जगदानन्दहेतुर्भगवानिति निबद्धम् तेन मूलविरुद्धमस्य व्याख्यानम्। अग्रेऽपि एवंरूपायाः भ्रान्तेर्लोकेऽपि संभवात्स्वतःसंभवित्वम् अत्र लोकपदेन नरतिर्य्यक्साधारणो लोको विवक्षितस्तिर्य्यग् लोक एव वा केवलः। यदि साधारणस्तर्हि जितं नागेशेन यद्युत्तरस्तत्र को हेतुः। नकोपि प्रत्येति स्वर्णत्वविषयिकां भ्रान्तिन्तिर्य्यक्षु असंभविन्येव सा अतो नागेशस्य साहित्याक्रमणपराक्रमाद्युपहासः स्वमौलौ कुठारप्रहार एव केवलम् इति सुधियः विवेचयन्तु। अतिदोषदर्शिनो दुष्टदृष्टेः निर्दुष्टेऽपि वस्तुनि स्वचित्तगतो दोषः दर्पण इव प्रकाशते तस्मात्साधूक्तं भट्टैः

> तस्मान्नातीव कर्तव्यं दोषदृष्टिपरं मनः
> दोषो ह्यविद्यमानोऽपि स्वचित्तानां प्रकाशत इति।

सर्वथा जगद्गुरुनागेशव्याख्यानं विजयत इत्यलम् ॐ शान्तिः शान्तिः शान्तिः ॥

अन्यदपि पण्डितप्रकाण्डस्य सरलापितुर्नागेशाक्रमणं निभालयन्तु सुधियः २५५ तमे पृष्ठे—सरसि प्लवदाभाति जम्बीरं

सुपचेलिमम् अत्र सुपक्वतया पीतवर्णं जलोपरि प्लवत् (तरत्) जम्बीरमुपमेयम् तोयौघोपरि भासमानं सुवर्णमयं ब्रह्माण्डं चोपमानम् अत्र जम्बीरस्योपमेयस्य ब्रह्माण्डमुपमानं प्रमाणतो नानुरूपम् अत्यधिकविस्तीर्णत्वात् इति ग्रन्थाशयेऽपि नागेशो व्याख्याति 'स्रवत् चञ्चलम्' किन्तु ब्रह्माण्डमण्डले चञ्चलमिति विशेषणं कियदुचितिमितिसुधिय एव विभावयन्तु। पुनः स्वारस्यं दृश्यताम् नागेशमहोदयो व्याख्याति—अत्र प्रमाणत आननुरुप्यम् तयोरत्यन्तविलक्षणत्वात् एतत्पोषकमपि सुपचेलिमम् इति विशेषणम् पक्वस्य अत्यन्तसूक्ष्मत्वात। आननुरूप्यस्य पचेलिममिति कथं पोषकं—पक्के हि जम्बीरे पीतवर्णेन ब्रह्माण्डेन सह आनुरुप्यमुदेति अथवा अननुरुपत्वम् नागेशमहोदयः प्राह पक्वं जम्बीरमतिसूक्ष्मं भवति अतएव तत् अननुरूपम्" पक्वं जम्बीरं रसाधिक्येन परिमाणाधिक्यं लभते उत् सूक्ष्मत्वम् अस्तु यदि सुपचेलिमम् इति विशेषणं नादास्यत तर्हि किं ब्रह्माण्डेन सह उपमायामानुरुप्यमभविष्यत् अतएव न तत्त्वं ज्ञायते किमुच्यते नागेशेनेति। (भट्टकुलकमलिनीप्रालेय ! नागेशेन यदुच्यते तस्य तत्त्वं शृणु बुभुत्सो। अत्र तोयौघे स्रवमानं ब्रह्माण्डमिव सरसि स्रवमानं पचेलिमं नारङ्गमाभाति अत्र अननुरूपेयमुपमा नारङ्गब्रह्माण्डयोः परिमाणतोऽननुरूपत्वात्। उपमायाः पोषकम् सुपचेलिममिति विशेषणम् अपि पक्वस्याप्यत्यन्तसूक्ष्मत्वात्। (ब्रह्माण्डापेक्षया नतु स्वपूर्वावस्थापेक्षया इति भट्ट गृहाण। भट्ट बालक्रीडनकैस्तावत् क्रीड एतद्योग्योसि)। किमु नागेशाशयं ज्ञास्यसि। भट्ट पक्वस्याप्यत्यन्तसूक्ष्मत्वादिति मर्मप्रकाशपाठं गृहाण। अशुद्धपाठमादाय पराक्रमितुं किं प्रवृत्तोऽसि)। भट्टः पक्वं जम्बीरमतिसूक्ष्मं भवति अतएव तत् अननुरूपम् इति नागेशमहोदयः प्राह। भट्ट एवं मिथ्याकलङ्केन नगेशमधिक्षिपतः नष्टप्रज्ञस्य ते किं भवितेति भविष्यज्ञ एव जानाति मिथ्या-

वादिन् कुत्र नागेशग्रन्थे एषा पदपङ्क्तिः। एतां स्वयं कल्पयित्वा कलङ्कमारोपयसि नागेशे नागेशमहोदयः प्राहेत्यादिना।

एतत्पोषकमपि सुपचेलिममिति विशेषणम्। पक्कस्याप्यत्यन्तसूक्ष्मत्वात् अयं नागेशग्रन्थः तं स्वमतिवैभवेन व्याचक्षाणेन त्वया कियदुपद्रुतम् पाठत्रुटिं नागेशाशयञ्चाविदुषो विदुषस्ते कियान् पात इति कृतश्रमा एव जानन्तु नतु संस्कृतकालेजस्यैतादृशस्य प्रयोगस्य प्रयोक्तारः पक्कं जम्बीरं रसाधिक्यात् परिमाणाधिक्यं लभते कस्मात् ब्रह्माण्डात् उत अन्यतः पक्कमपि जम्बीरं ब्रह्माण्डापेक्षया अतिसूक्ष्ममेवेति सुदृढं गृहाण। अतएव उपमानिष्पत्तये उपात्तमपि तत् नोपमानिष्पादनायालमिति सुस्थम्। कण्टकोद्धरणेनायमन्तर्यामी प्रसीदतु। चेतांसि विदुषां चापि मोदन्तां सुधियश्चिरम्।

ॐ शान्तिः शान्तिः शान्तिः

अपि च निभालयन्तु सुधियोऽस्य भट्टस्यान्यन्नागेशाक्रमणम् यदयं प्रलपति काव्येषु कियत्परिचय इत्यपि परिचीयतामिति (अये पण्डितंमन्य? कियत्परिचय इति न प्रयोज्यं कियान् परिचय इति साधु प्रयोज्यम् गुरुनिन्दकस्य ते सर्वमधीतम् गलितम्)।

अस्याः सर्गविधावित्यादि पद्यम् विक्रमोर्वशीये, नागेशो व्याख्याति मालतीमाधवे मालतीवर्णनमिदम् विवादवेतालाविष्टतया साहित्यसौधे बलादुत्प्लवमानस्य महाभागस्य पुनः परिचीयतां काव्यमार्मिकत्वं येन हि कालिदासस्यापि कविता न कदाचित्परिचितेति" (अये भट्ट प्राचीनलिखितपुस्तके मालतीमाधवे मालतीवर्णनमिदम् इति भागो नैवोपलभ्यते मत्पुस्तके अस्यानुपलम्भात्

ग्रन्थकारशैलीविरुद्धत्वाच्च। मर्मप्रकाशकारः कुत्रापि उदाहृतश्लोकस्य स्थलं न निर्दिशति अत्रैव निर्दिदेशेति का प्रत्याशा। केन चित् स्वीये पुस्तके टिप्पणरूपतया अयं पाठो धृतो भवेत्तेन मुद्रणे अयं पाठः प्रमादपतितः अयमेव निबन्धेषु सम्पातायात इति निबध्यते। भवतु वा नामविपर्यास एतावता नागेशस्य साहित्यमार्मिकता नापयाति इति सन्तोष्टव्यम् निन्दैकपरायणजीवनेन सुजनेन त्वया। तवाक्षेपान् समाधाय तव साहित्याज्ञतामूलं त्वदीयाक्षरैरेव लोकानां पुरतोऽवस्थाप्य तवाभिमानद्रुमं समूलमुन्मूलयितास्मि तावत् स्थिरो भव। तव भूमिकाविचारे जनास्तवाज्ञानं परिचेष्यन्ति। बालकोऽपि यस्यते कियत्परिचय इति लिखतः प्रज्ञा नालंकर्मीणा इति वेत्ति तस्य रसगङ्गाधरग्रन्थिभेदने कियानधिकार इति प० म० म० गिरिधरशर्माण एव विदाङ्कुर्वन्तु इति शिवम्।

अपिच निभालयन्तु सुधियः अत्रैव ३४३ तमे पृष्ठे संशयलक्षणस्याव्याप्तिमाहुरिति ग्रन्थं व्याकुर्वता ( नाह नहि ग्रन्थं नाशयता ) अनेन प्राज्ञभट्टेन संदेहालङ्कारलक्षणं संगमयता यदुक्तम्—भासमानविरोधकः समबलः नानाकोट्यवगाही संदेहस्तन्नामालङ्कार इति लक्षणमत्र न घटते इत्यर्थः। अये साहित्याभिज्ञ समबलइत्यस्य कुत्रान्वयः। सन्देह इत्यत्र नाना कोटौ वा। यदि प्रथमे तदा समबलः सन्देहः केन इत्यादि जिज्ञासायां तवाज्ञतैव जिज्ञासा निवर्तिका. द्वितीये कथं तत्रान्वयस्तद्योग्याकाङ्क्षाभावात्। अये बुध पण्डत—राजलक्षणम् उपक्रान्तं कथं विस्मृतवानसि। मूले तु सादृश्यमूला भासमानविरोधिका समबला नानाकोट्यवगाहिनी धी रमणीया ससन्देहालङ्कृतिरितिसन्देहलक्षणं निर्दिष्टम्। त्वया तु तदनादृत्य विस्मृत्य वा समबलो नानाकोट्यवगाहीति प्रलपितम् एतावता पाण्डित्येन नागेशं कथं पराजेष्यसे। धिङ् मन्द निर्लज्जोऽसि

यस्य ते विशेष्यविशेषणयोः लिङ्गज्ञानमपि नास्ति तस्य ते कृतिः कथं विदुषां मोदमाधास्यति। शोच्योऽसि वृथाश्रमस्ते पूतिकुष्माण्डायिता ते सरला। अत्र पाठसंशोधनाभिमानवता "भासमानविरोधका इति पाठः" शोधितः साधु वैयाकरणोऽसि चिरंजीव्याः।

अपिच परिपश्यन्तु अस्य शब्दार्थशास्त्रयोरनभिज्ञस्य सरलायाः १७७तमे पृष्ठे नागेशमाक्रोशतः प्रलापम्। तथाहि तृतीयाविभक्तिसाधुत्वसाधनं भवेद्वैयाकरणपुङ्गवस्य नागेशमहोदयस्य मते समाधानम् किन्तु यत्रशब्दपुनरुक्तिरेव हेया तत्र साहित्ये अभिधया प्रतिपादकत्वमभिधेत्यस्येदमुत्तरं किं ग्राम्यतां नावहेत् ? इत्यन्तम्। अयि सुधियः अप्पय्यदीक्षितानां वृत्तिवार्तिकीयमभिधालक्षणमुपद्रवता रसगङ्गाधरकृतोक्तम्—तच्च लक्षणं शक्त्या प्रतिपादकत्वमभिधेति। अत्र किञ्चित्पूर्वं विचार्य्य पश्चात् शक्त्येत्यनेन शब्दगताऽर्थगता वा काचिच्छक्तिः प्रतिपत्तिहेतुतया विवक्षिता सैवाभिधेति अभिधयाप्रतिपादकत्वमभिधेति लक्षणं पर्य्यवसन्नम्। तथाच स्फुटैवासङ्गतिरात्माश्रयश्चेति। नचाभिधातः शक्तिरतिरिक्ता शब्दजन्यप्रतिपत्तिप्रयोजिका काचिदस्तीत्यत्र प्रमाणमस्ति, तदाक्षेपं समादधता नागेशेनेदमुक्तम्—प्रकृत्यादित्वाद्धान्येन धनवानित्यादिवत्तृतीयाया अभेदार्थकत्वेन न कश्चिद्दोष इतिचिन्त्यमेतत्सर्वमिति। जगन्नाथेन करणत्वाद्यथमुद्भाव्य दोष उक्तः सच नागेशेन अभेदार्थां तृतीयां व्याख्याय समाहितः। असङ्गतिस्तु अभेदार्थतृतीयाव्याख्यानेन दूरोत्सारिता अवशिष्ट आत्माश्रयः स च परिहृतोऽपि मन्दबुद्धिभिरनवगत एव इति व्याख्यायते। शक्त्या प्रतिपादकत्वमभिधेति वृत्तिवार्तिकम्। शक्त्यभिन्नप्रतिपत्यनुकूलोव्यापारः अभिधापदव्यवहार्य्यः अत्र क्वात्माश्रयः। मीमांसकाः कार्य्यानुकूलशक्तिमत्त्वेन कारणतांवदन्ति। त उपपादयन्ति च महता संरम्भेण कारणतावेच्छेदिकां शक्तिं। तत्र या काचिल्लोक

प्रसिद्धा शक्तिः शब्दार्थप्रतिपत्त्यनुकूला सैवाभिधा न ततोऽतिरिक्ता । यदि शक्तिज्ञानं विना लक्षणानिष्पत्तिः स्यात्तदाऽऽत्माश्रयो भवेदपि अत्र तु शब्दनिष्ठा शब्दार्थप्रतिपत्त्यनुकूला या काचिच्छक्तिः सैवाभिधा शब्देन व्यवह्रियते इतिनागेशनिगूढाशयः सहृदयवेद्य इति न नागेशेन प्रकटीकृतः तत्सर्वं दोषं समाधानञ्चाज्ञात्वैव मेरटनगरगामिना पञ्चमाश्ववारेणानेन भट्टेन खरप्लुत्यैवोपेक्ष्य च तृतीयाविभक्तिसाधुत्वसाधनमित्यारभ्य किं ग्राम्यतां नावहेदित्यन्तं प्रलपितम् । उपेक्षाकारणञ्चोभयोः पक्षयोरज्ञानमेव । तथाहि अयं प्रलपति तृतीयाविभक्तेः साधुत्वसाधनमये सुधीवर तृतीयाविभक्तेः साधुत्वमपि साध्यते इतिजानासि । भवतु यथाकथञ्चिदियमुक्तिः । अये साहित्यमर्मज्ञ अत्र पुनरुक्तिं पश्यसि भ्रान्तोऽसि नात्र पुनरुक्तिलेशोऽपि । इत्थं शब्दस्वरूपसाम्येऽपि यदि पुनरुक्तिर्भवेत्तदा यमकमहायमकादीनामतीव हेयता स्यात् । साधु वोधितवानसि आत्मनः साहित्य मर्मज्ञताम् । अये विद्वन्निन्दैकरसिक साधु दृष्टिपथमुपयातोसि प्रकाशयितास्मि ते पाण्डित्याणुमात्रां स्थिरो भव । शक्त्या प्रतिप्रतिपादकत्वमभिधेत्यादि नागेशोत्तरम् मूर्खाणामेव ग्राम्यतया प्रतिभायान्नतु विदुषामिति सन्तोष्टव्यम् ।

अपराद्ध अस्य साहित्यमर्मज्ञतां परिशीलयन्तुः सन्तः ।

भूमिकायां ३७ तमे प्रलपति—

शरदिन्दुरिवाह्लादजनको रघुनन्दनः । वनश्रजा विभाति स्म सेद्रन्चाप इवाम्बुदः ॥

अत्र शरदिन्दुरित्यादिपूर्वार्धे आह्लादजनक इति धर्मः ( नहि-मन्द आह्लादजनककत्वं धर्म इति वाच्यम् ) रामे मेघे चानुगामी सकृन्निर्देशात् । द्वितीयार्धे ( वनश्रजेत्यत्र ) तूभयम् अर्थात् विभा-

तिस्मेति मेघरामयोरनुगामी (धिङ् मन्द राममेघयोरिति वाच्यम्) वनमाला इन्द्रधनुषोश्चाभेदाध्यवसानेन विम्बप्रतिविम्बभावापन्न इत्युभयविधः। (अनेन पण्डितंमन्येन वनमाला इन्द्रधनुषोरिति समासेऽपि सन्धिस्त्यक्ता) इति पण्डितराजाशयः। किन्तु नागेशो व्याख्याति द्वितीयार्धे कषायवसनो यातीत्यादौ, अत्र हि कुङ्कुमालेपादेर्यतिमात्रविशेषणतया साधारणधर्मत्वाभावेन उपमैव न सम्भवतीति न ज्ञातं नागेशेन—अस्य सरलायान्तु द्वितीयार्धे इत्यस्य कषाय वसनो याति इत्यादौ इति टीकयन्नागेशस्तु भ्रान्तः, इत्येवंप्रलपति। पश्यन्तु सुधियः अस्यैव भ्रान्ततां मयोपस्थापिताम्–तथाहि–मूलकारेण उपमायाम् धर्मो क्वचिदनुगाम्येव क्वचित्केवलं विम्बप्रतिविम्बभावापन्नः क्वचिदुभयम् क्वचिद्वस्तुप्रतिवस्तुभावेन करम्बितं विम्बप्रतिविम्बभावम् इत्यादयो निर्दिष्टाः। क्रमेण उदाहरति आद्यो यथा शरदिन्दुरिवेत्यादि। अत्र पूर्वार्धे सकृन्निर्देशाद्धर्मोनुगामी। केवलविम्बप्रतिविम्बभावापन्नः कोमलातपशोणाभ्र इत्यत्र बोध्यः। द्वितीयार्धे तूभयम् इति रसगङ्गाधरग्रन्थं व्याचक्षाणो नागेशः द्वितीयार्धे कषायवसनोयातीत्यादौ। नवीनभट्टस्तु शरदिन्दुरिति पद्यस्य द्वितीयार्धे इति साहंकारं वदति। युक्तिञ्च कथयति कुङ्कुमालेपादेर्यतिमात्रविशेषणतया साधारणत्वाभावेन उपमाया अभावात्। (अये भट्ट यद्यत्रोपमायाअभावस्तदा कथं रसगङ्गाधरकारेण धर्माणामसाधारण्यमाशङ्क्य अभेदाध्यवसानमूलविम्बप्रतिविम्बभावेन साधारण्यं च समाधाय उपमा समाहिता। अत्रापि त्वदभिमतार्थेपि उदाहरणे उभयविधधर्मोदाहरणस्थलेऽपि असाधारण्यपरिहारस्तु पूर्ववदेव। अन्यथा अत्रापि उपमाया असम्भव एव स्यात् तर्हि नागेशव्याख्यातोदाहरणे यं दोषं पश्यसि तं कथमत्रापि न निभालयसे यदत्र समाधानं पश्यसि तत्तत्रापि कथं न पश्यसि अहो ते नष्टबुद्धिता गुरु-

निन्दकस्य । अथेदं परं तावदवशिष्यते समाधातुं यन्नागेश एतदुदाहरणं परित्यज्य कथं प्राचीनमेव पद्योत्तरार्धं द्वितीयार्धत्वेनाव्याख्यदिति । तस्यायं समाधिः । तथाहि रसगङ्गाधरे केवलविम्बप्रतिविम्बभावापन्नः कोमलातपशोणाभ्र इत्यत्र वोध्य इति निर्दिश्य तदनु द्वितीयार्धेतूभयमिति निर्दिष्टम् द्वितीयार्धे कुत्रेत्याकाङ्क्षायां पूर्वसन्निहितात्रपदाध्याहारेण कषायवसनो यातीत्यादेरेवार्धस्य झटित्युपस्थानात् ग्रन्थकृदभिप्रेतत्वाद्योग्यत्वाच्च नागेशव्याख्यानमेव विदुषां तोषकरम् नतु तवाज्ञस्य । युक्तं चैतत् इदमस्तु सन्निकृष्टम् समीपतरवर्ति चैतदो रूपम इति । अत्र अत्रेतिपदन्यासात्समीपतरवर्तिनः कोमलातपेत्यादिपद्योत्तरार्धस्यैवौपस्थितिः साधीयसीति नागेशव्याख्यानमेव साधु इति गृहाण' अतः न नागेशो भ्रान्तः किन्तु तव मौर्ख्येणैव तथा कल्पित इति चतुरस्रम् । ( २२८ पृष्ठेमूले )

अथापरं परिशीलयन्तु सन्तः भट्टकुलकमलिनीनीहारस्येव काव्यमार्मिकस्य विद्वन्मन्यस्य कदुद्गिरणम् । तथाहि अयमपह्नुतिप्रकरणे ३६८तमे पृष्ठे इदमाह—अत्रापि विरोधे यत्किञ्चिद्वक्तव्यमित्येव नागेशस्य परिकरवन्धः इत्यारभ्य मार्मिका विमृशन्तु इत्यन्तम् इति । अत्र प्रकरणे दीक्षितस्य पर्य्यस्तापह्नुतिं खण्डयता जगन्नाथेन चरमो हेतुः अपह्नुतिसामान्यलक्षणाभावो निर्दिष्टः ततश्च पर्य्यस्तापह्नुतिलक्षणोदाहरणं नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखमित्यमुं दृढ़रूपकमेव स्वीचकार । तत्र हेतुं च उपमेयतोपमानतावच्छेदकयोः सामानाधिकरण्यस्य निष्प्रत्यूहं भानादिति उज्जगार । अत्र विमर्शिनीसंवादं चोपन्यस्तवान्—तदाक्षिपता नागेशेनोक्तम् । इदं चिन्त्यम् नेदं मुखं चन्द्र इति प्रसिद्धापह्नुत्युदाहरणेऽपि मुखनिषेधस्य चन्द्रारोपदार्ढ्यसंपादकत्वस्य वक्तुं शक्यत्वेन अनुभवसिद्धत्वेन चापन्हुतिमात्रस्योच्छेदापत्तेः । यदि तु

निषेधपूर्वकारोपे चमत्कारविशेषस्यानुभवसिद्धत्वादलङ्कारान्तरता तर्हि प्रकृतेऽपि तुल्यमिति एतावान् नागेशस्य चिन्त्यग्रन्थः। अत्र अयं नवभट्टः रसगङ्गाधरीयं लेखमबुद्ध्वैव तथा नागेशग्रन्थमपि बहून्मत्तवत्प्रलपति तत्सुधिय एव विवेचयन्तु। तथाहि नेदं मुखं किन्तु चन्द्र इति प्रसिद्धापह्नुत्युदाहरणे मुखं न इति विषयतावच्छेदकपुरस्कारेण विषयस्य (मुखस्य) निषेधः स्पष्ट एव। विषये यद्यनिन्हुत इति दीक्षित लक्षणानुसारमपि विषयस्य निषेधो रूपके विरुद्धः एवंचात्र रूपकसाधनं दुराग्रहमात्रम् निषेधो रूपकदार्ढ्यसंपादक इत्युक्तिरपि प्रतिपक्षिचक्षुषोरुद्धूलनमात्रम् इति। (अत्रकिञ्चित्प्रष्टव्यम्। जगन्नाथमतसमर्थकलोकोत्तरप्रज्ञ इदं भवदुक्तम् नागेशमतखण्डनम् जगन्नाथमतस्य समर्थनम्बा यदि, आद्यस्तदा जगन्नाथोऽत्र कथं पर्य्यस्तापन्हुत्युदाहरणम् दृढारोपरूपकत्वेनोरीचकार यद्यत्ररूपकसाधनं दुराग्रहमात्रं तदा सुधांशुः प्रेयसीमुखमित्यत्र दृढारोपं रूपकमेव भवितुमर्हति नापह्नुतिरिति रसगङ्गाधरस्य कागतिरिति जगन्नाथमुपालभ। का पुनस्तस्य दार्ढ्यसंपादनाशा इतिजगन्नाथग्रन्थमाक्षिप कामम्। अथ वा जगन्नाथमेवं वद-भो जगन्नाथ इदं तव दृढारोपरूपकसंपादनं गगनकुसुमैरलङ्कारसाधनमेव। मन्द यमेव समाधातुमुद्यतस्तमेव स्ववाक्कुठारैश्छिनत्सि अहो ते पाण्डित्यं बुद्धिवैभवञ्चेति) अग्रेच 'नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुख'मत्र तु प्रेयसीमुखं सुधांशुरिति रूपकं वादिप्रतिवादिविधया स्फुटमेव सिद्ध्यति। (मन्द वादिप्रतिवादि विधया कथं सिद्ध्यति नह्यत्र दीक्षितः रूपकं स्वीकुरुते त्वत्कथनमात्रेण दीक्षितस्तदनुयायी वा अमुं रूपकं कथं स्वीकुर्यात् नायं सुधांशुः इति गगनस्थचन्द्रस्य कृते निषेधस्त्वत्कृते वा निषेधोऽस्तु किमनेनोन्मत्तप्रलापेन चन्द्रस्य निषेध इति प्रयोज्ये चन्द्रस्यकृते इति प्रयुञ्जता स्वीयोन्मत्ततैवास्फोटि इत्यलमुन्मत्तकलहेनेति शिवम्।

अपरञ्च निभालयन्तु सरलापितुः प्रकाण्डपाण्डित्यं साहित्यमर्मज्ञताञ्च सुधियः २८ अष्टाविंशतितमे पृष्ठे मर्मप्रकाशस्याधःपतितायां सरलायां 'नच कान्तात्वं साधारणविभावतावच्छेदकमत्राप्यस्तीति वाच्यम् । अप्रामाण्यनिश्चयानालिङ्गितागम्यात्वप्रकारकज्ञानविरहस्य विशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकस्य विभावतावच्छेदककोटाववश्यं निवेश्यत्वादिति ग्रन्थस्य ग्रन्थिभेदने (नहि नहि अस्य ग्रन्थस्य मर्मणि प्रहारे) प्रवृत्तस्य इयं सरला—शृङ्गारे कान्तादेर्विभावतावच्छेदककोटौ (अर्थाद्विभावत्वनिर्धारणे) (भट्ट रसगङ्गाधरकुठार ? कान्तादेरत्रत्यादिपदेन उद्दीपनविभावोऽपि जिघृक्षितः किम् अस्तु विभावतावच्छेदककोटौ इत्यस्य भवदभिप्रेतोऽभावोऽवश्यं निवेश्यः इत्यनेनान्वयः। भवद्व्याख्यातोऽभावः समवायसम्बन्धावच्छिन्ना प्रतियोगिता यस्य ईदृशस्य अप्रामाण्यनिश्चयेनास्पृष्टस्य इयमगम्यास्तीत्याकारकज्ञानस्याभावेऽवश्यं निवेश इत्यनेन। तथानिवेशेन विभावस्वरूपं किं निष्पन्नं जानासि यदि जानासि तदा तत्स्वरूपनिर्देशे किं दैन्यमालम्बितम् न जानास्येव तदनुल्लेखात् । अस्तु स्वरूपपृच्छा । विभावतावच्छेदककोटौ मूलकर्त्रा निरुक्ताभावस्य विशेष्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकस्य निवेशितस्य तव इदं विवरणं समवायसम्बन्धावच्छिन्ना प्रतियोगिता यस्येदृशस्येति विरणमर्थाद्विवरणम् । श्रौतविवरणम् वा। श्रौतविरणं तु कालत्रयेपि न भवति अर्थाद्विवरणमेवावशिष्यते। कथञ्च तदर्थाद्विवरणम्। नहि तदपि सम्भवति कस्यचिच्छ्रुतस्य दृष्टस्य वार्थस्यानुपपत्तेरभावात् तर्हि एतादृशविवरणस्य किं मूलम् मौर्ख्यमेव। नहि भक्षितेऽपि लशुने शान्तो व्याधिस्तथाहि भट्टनायकमतोपपादनावसरे—नच कान्तात्वं साधारणं विभावतावच्छेदकमत्राप्यस्तीति वाच्यम् (अनेन मन्देन साधारणविभावतावच्छेदकमिति पाठः शोधितः) अप्रामाण्य-

निश्चयानालिङ्गतगम्यात्त्वप्रकारकज्ञानविरहस्य विशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकस्य विभावताच्छेदककोटावश्यं निवेश्यत्वात् अन्यथा श्वश्र्वादेरपि कान्तत्वादिना तत्वापत्तेरिति रसगङ्गाधरग्रन्थः। इयमगम्येति ज्ञानं विषयताविशेषविशेष्यतासम्बन्धेन ज्ञातरि अस्ति समवायसम्बन्धावच्छिन्नप्रतियोगिताकस्य तद्विरहस्य तु इयमगम्येतिज्ञानकालेऽपि राजभार्य्यादौ स्वसृश्वश्वादौ सत्त्वात् भ्रातृभृत्यादिरतेस्तासामपि विभावत्वापत्तेः सोयं सेवितेऽपि लशुने इत्यादिन्यायः। विशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकस्य तदभावस्य तु तज्ज्ञानकाले (इयमगम्येति ज्ञानकाले) न सत्त्वं तज्ज्ञानकाले तेन सम्बन्धेन तज्ज्ञानस्य विशेष्ये सत्त्वात्। तदभाववत्तावुद्धिं प्रति तद्वत्तावुद्धे विरोधित्वात्। तथाच तादृशसम्बन्धावच्छिन्नप्रतियोगिताकतादृशाभावविशिष्टकान्तात्वमेव – विभावतावच्छेदकम् तज्ज्ञाने न विभावज्ञानम् अन्यथा तदनुपपत्तेरिति (एते विद्वद्द्वेपिण एतया धिया फक्किकाभ्यासिपदेन विपरीतलक्षणया विद्वांसं क्रोशमाना आत्मानं निरयगामिनं कुर्वन्तः शोच्या एव सोयं घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहः। (भट्टशिशो कियन्तं कालं महामहोपाध्यायं सेवमानेन न्यायव्याकरणपरिभाषादि ग्रन्थानधीत्य काश्यादावागत्य रसगङ्गाधरः केनचित् सुधिया अध्येतव्यस्तदनन्तरम् कश्चिदस्य भागः योग्यताप्राप्तौ व्याख्येयः)। तदनन्तरं भट्टप्रलापः अयं भावः कान्तायाः शृङ्गाररसे विभावत्वं तदैव भवेत् यदा इयमगम्या नास्तीति प्रामाणिको निश्चयः स्यात् इति—भट्ट इयमगम्या नास्तीति प्रामाणिकनिश्चयस्य यदि विभावताप्रयोजकत्वं तदा यस्य इयंकान्तेति निश्चय उक्ताभावविशिष्टस्तस्य शकुन्तलादौ विभावत्वं न भवेदिति त्वदभिप्रायस्तदा निमग्ना साहित्यनौका तवाज्ञानोदधौ हा त्वरितमुद्धरन्तु एनां साहित्यमार्मिकाः सुधियः। अस्तु तवावचनीयता। तस्मादभिधयानिवेदिताः

पदार्थाः भावकत्वव्यापारेण (भट्टनायकसम्मतेन) अगम्यत्वादि रसविरोधिज्ञानप्रतिबन्धद्वारा कान्तत्वादिरसानुकूलधर्मपुरस्कारेणावस्थाप्यन्ते इत्यनेन ग्रन्थेन केवलकान्तात्वस्यैव ज्ञानमपेक्षितं रसास्वादे प्रतीयते तं कथं संगमयितासि। अस्तु किन्तेन नहि अन्धस्य पूर्वापरज्ञानं भवतीति सन्तोष्टव्यम्। विद्वत्प्रकाण्डभट्टयस्य विदुषः फक्किकाभ्यासस्तद्योग्यता वा स एव पण्डितधुरीणोऽमुं ग्रन्थं व्याख्यातुं पाठयितुञ्चार्हति यदि अन्यादृशोऽपि तथा कर्तुं शक्नोति चेत्तदा तव व्याख्यानदुर्दशायाः शोच्यां दशां परिहरतु इति उच्चैःक्रोशमाह्वयामि।

अपि च सुधियः सारासारविवेचनपटवः इदमपरमपि कपिकूर्दनं पश्यत भट्टकिशोरस्य। यदयं ४०६ तमे पृष्ठे हनूमान्निति नागेशटीका तु परमेश्वरार्थं ब्रुवतो ग्रन्थकृतो विरुद्धा। वायुजनकः परमेश्वरः इत्यपि चङ्क्रमणमेवेति उत्प्रेक्षाप्रकरणे– **नासत्ययोगो वचनेषु कीर्तौ तथार्जुनः कर्मणि चापि धर्मः॥ चित्ते जगत्प्राणभवो यदास्ते वशंवदास्ते किमु पाण्डुपुत्राः** इति पद्यस्य व्याख्यायां वायुपुत्रो भीमो हनूमांश्च। यद्वा पञ्चम्यर्थबहुव्रीहिणा वायुजनकः परमेश्वर इति व्याख्यातम् नागेशेन जगत्प्राणभवपदम्। अत्र जगत्प्राणभवपदस्य हनूमान् इति व्याख्यानं कथं ग्रन्थकृद्विरुद्धम् हनूमतः शिवावतारत्वात् ईश्वरत्वमविरुद्धमेव कथं मन्दप्रज्ञेनाक्षिप्तम्। वायुजनकः परमेश्वर इत्यपि कथं चङ्क्रमणम्। तस्माद्वा एतस्मादाकाशः सम्भूतः आकाशाद्वायुरित्यादिश्रुतसिद्धत्वाद्यतोवा इमानि भूतानि जायन्ते येन जातानि जीवन्तीत्यादिश्रुतिसिद्धत्वाच्चेति। पश्यन्तु सुधियः अयमभागधेयः प्रतिज्ञामात्रेण स्वमतं सिषाधयिषति नहि स्वमतसाधकं किञ्चिदपिसाधनमुपन्यस्यति अहो विदुषां समाजे धाष्टर्यमस्य। नागेशव्याख्यानं श्रुतियुक्तिसंवद्धमपि कदर्थयति इदमेव त्यक्तपटनर्तनम् कुधियां मोदकरमपि सुधियां

व्रीडाकरं पीडाकरञ्च। अस्य अनधीतव्याकरणस्य नअसत्यमिति असत्याभाव इति नासत्यपदव्याख्यानं सुधियां व्रीडाकरम्। अये मन्द न असत्यमिति विग्रहे अनश्व इतिवत् अनसत्यमिति स्यात् अथ च जगत्प्राणभवइत्यस्य राजपक्षे—जगतां प्राणभूतः शिवः इत्यर्थः। अये नागेशाक्रोशनदक्ष राजपक्षे इति त्वद्व्याख्यानेन पक्षान्तरमपि प्रतीयते किं तत् वक्तुं प्रभवसि। किंवा स्वप्ने ब्रवीषि इत्यलम्।

अपरमपि निभालयन्तु नागेशनिन्दैकरतस्य प्रलापम् यदयं ६१ तमे पृष्ठे। **नितान्तं यौवनोन्मत्ताः गाढरक्ता सदाहवे वसुन्धरां समालिङ्ग्य शेरते वीर तेऽरय इति** पद्यस्य व्याख्याने यौवनौन्मत्ताः गाढरक्ताः वसुन्धरां समालिङ्ग्य इति त्रिभिर्विशेषणैस्तेषां मृतौ ( अये वैधैय अमीषां विशेषणानां किं विषत्वं शस्त्रत्वं वा येन तैर्विशेषणैरेषां मृतिर्भवेत्। प्रकृतिस्थोऽसि उन्माद्यसि वा यदि उत्तरस्तदा त्वद्व्याख्यानेन कथं रसगङ्गाधरोपकारः अहो दयनीया दशा अस्य विचेतन इव प्रलपतः) अपि च वसुन्धरां समालिङ्ग्य इत्येतावन्मात्रं न विशेषणं किन्तु विशेषणैकदेशोयम् स्वस्थेन ग्रन्थनिर्मितिर्भवति अन्यथा उन्मत्तवागिवोपेक्ष्येतैव। किंच तेषां मृतौ करुणः प्रतीयते किं भोः जीवने न करुणः प्रतीयते कथं न प्रतीयते एतादृशदशायोगिंषु करुणस्यापि वहुशः प्रतीयमानत्वात् किञ्चापरमपि प्रलपति—परं यौवनोन्मादगाढानुरागालिङ्गनादिभिः ( आदिपदेन हतदैवस्य किमभिप्रेतमिति न ज्ञायते ) शृङ्गारोऽप्यभिव्यज्यते इति त्रयाणामेव साधारणतेति। किमत्र समुदितानामभिव्यञ्जकत्वं चक्रादिन्यायेन कारणत्वमिव। तृणारणिमणिन्यायेन प्रत्येकस्य वेति यदि च समुदितानां कथमिति, कथञ्च कारणतावगमः, यदि अन्त्यः कोत्र नागेशापराधः। किञ्च गाढरक्ता इत्यस्यैव साधारणत्वमिति नागेशाभिप्रायः कथमवधृतो वैधेयेनेति

अकारणमेव नागेशमाक्रोशतः शोच्यतैव शोच्या विचार्य्येतिशिवम्
अयमेव हि अर्थः भीमसेनकविना स्वीयेन पद्येन व्याख्यातः यथा—

य एष कुरुते मनो विपदि गौरवीणां गिरां,
स वामन इवाम्बरे हरिणलाञ्छनं वाञ्छति। ।
लिलङ्घिषति सिंहिकारमणकेशरं फेरुवत् ;
पतङ्ग इवपावकं नृहरिमावकं गच्छति ॥ इति अलम् ।

अथान्यदपि पश्यन्तु धीरा भट्टवटोः कूर्दनम् अकारणं नागेशाक्रोशनञ्च तथाहि नूतन मुद्रित रसगङ्गाधरपुस्तके ४४१ तमे पृष्ठे प्रतिवस्तूपमालक्षणान्तर्गतमार्थमिति विशेषणं सार्थकयता नागेशेन 'दिवि भाति यथा भानु स्तथा त्वं भासि वै भुवि' इत्यादौ वाक्यार्थोपमायामतिव्याप्तिवारणायार्थमिति नागेशेन पदकृत्यमुक्तम् तत्र भासि वै इति तु नागेशस्य भ्रम इति भट्टवटुः प्रलपति हेतुञ्चात्रोपन्यस्यति 'भासि' इत्युभय दलपाठे पृथक् शब्दाभ्यामुपादानाभावाद्वस्तुप्रतिवस्तुभाव एव नस्यात्ततश्चात्र तद्वारणार्थमार्थमिति विशेषणपर्य्यन्तमनुधावनं व्यर्थं स्यात् तस्मात्तथापदसंबद्धे उपमेयदले भ्राजसे इत्येवपठितव्यम् इत्यन्तम्। अये भट्ट शिशो नात्र नागेशस्य भ्रमलवोऽपि अपितु तवैव महान् भ्रमः यतोऽभिन्नयोरपि आश्रयभेदाद्भिन्नयोः प्रत्युच्चारणं शब्दाः भिद्यन्त इति नयेन च सदृशशब्दाभ्यां पृथगुपादानात् एकस्यैव धर्मस्य पृथकशब्दाभ्यामुपादानं वस्तुप्रतिवस्तुभाव इति नागेशोक्तम् तथा मूलकृतापि आश्रयादिभेदाद्भिन्नयोरपि वस्तुत एकरूपतैव वस्तुप्रतिवस्तुभावश्च तथा भासि इति दलद्वयपाठेऽपि वस्तुप्रतिवस्तुभावस्य न हीनतेति स्वयं भ्रान्तो नागेशं भ्रान्तं जल्पसि दुश्चिकित्सा ते प्रज्ञान्धतेति।

किञ्च स्मरणस्य तदसंपर्कादिति मूलप्रतीकमादाय विवृण्वतः नागेशस्य यथा वाक्यार्थोपमायां गगनाधिकरणकभानुकर्तृकशोभाविशिष्टभूम्यधिकरणकत्वत्कर्तृकशोभेति बोधः वैशिष्ट्यनियामकसम्बन्धश्च स्वकर्तृसदृशकर्तृकत्वमेव सबन्धविशेषतात्पर्य्यग्राहकौ च यथा तथा शब्दौ । न च वाक्यार्थोपमायां तादृश शोभाश्रयभानुसदृश ईदृशशोभाश्रयस्त्वमितिबोधः क्रियाविशेषणस्य प्रथमान्तार्थस्योपमानत्वेनान्वयायोगात् इत्यन्तेन ग्रन्थेन तदाशयं तदुक्तहेतुञ्चाबुद्ध्वैव प्राज्ञंमानी मन्दभट्टः नागेशस्त्वत्र तदसंपर्कादिति प्रसङ्गे वाक्यार्थोपमायाम् गगनाधिकरणकभानुकर्तृकशोभासदृशी भूम्यधिकरणकत्वत्कर्तृकशोभेति बोधमनुक्त्वा यथा तथा पदयोः सबन्धविशेषान्तरितमुपमानोपमेयभावं जल्पन् वक्तव्यविषयं मुधैव स्वनामसदृशं वक्रयामासेति प्रललाप । तादृशा बोधानुक्तौ उक्तमपि कारणमबुद्ध्वैवाक्षिपति नागेशम् । तदत्र पश्यत सुधियः यस्याल्पधिषणस्य नागेशग्रन्थार्थावगतावपि इयं दशा तं नागेशं दूषयितुं रसगङ्गाधरं व्याख्यांतु चोत्सहमानस्य प्रज्ञान्धस्य का प्रज्ञा चिकित्साऽयमेव प्रांशुलभ्ये फले मोहादुद्बाहुवामनन्यायः इमञ्चापरमाक्षेपं मन्दस्य विलोकयन्तु सुधियः ४०७ पृष्ठे ।

माधुर्य्यपरमा सीमा सारस्वतजलधिसंभूता ।
पिव तामनल्पसुखदा वसुधायां ननु सुधा कविता ॥

अस्य नागेश व्याख्यानम् "या माधुर्य्यस्य परमाधारभूता सारस्वतरूपसमुद्रमथनजा भुवि तां वहुसुखदां सुधारूपकवितां ननु निश्चयेन पिवेत्यर्थः इति । अत्राक्षिपति मन्दभट्टः पिवतामिति कविसम्मतषष्ट्यन्तार्थान्वये या अस्ति तां पिवेति अगतिकगतेराक्षेपस्य कल्पना जाह्नवीजलेऽवकरप्रक्षेप इव नागेशमहाभागस्येति प्रशंस-

स्यतां साहित्याक्रमणपराक्रमनक्रत्वमस्येत्यलम् । अत्रेदं वक्तव्यम्— अयेऽमन्दबुद्धे भट्ट पिबतामिति षष्ठ्यन्तार्थेन सहान्वये एषाआकाङ्क्षा पिबतामनल्पसुखदा सुधा कविता—किं पिबतामित्याकाङ्क्षायां किंवक्तव्यम् सुधामन्यद्वेति यदि सुधामित्यादि तदा नास्तिश्रूयमाणं द्वितीयान्तं तदा कथं कविसम्मतषष्ठ्यन्तार्थेनान्वयः अत्र वाक्ये कस्याः क्रियाया अध्याहारः अस्ति क्रियाया इति चेत् सोभयोः समानः अनन्तरं यामिति पदस्याध्याहारमभिप्रैषि चेत्तत्वाज्ञानं यत्तदोर्नित्यसाकाङ्क्षत्वान्नित्यसम्बद्धत्वाच्चानध्याहारएव तामिति छेदे तत्पदेन साकाङ्क्षयत्पदाध्याहारस्यादूषणत्वात् अत्र तामिति कवितामुद्दिश्य पानं विधेयम् , त्वद्व्याख्याने इदं कथं संभवेत् इदं नागेशस्य साहित्यक्रमणपराक्रमनक्रता तव म० म० बुभूषा वेति को हि बुध्येत् । अतीव विद्वद्ध्रुगसि कस्त्वां शिक्षेत् नतु प्रतिनिविष्टमूर्खजनचित्तमाराधयेदितिमहाकवेरुक्तिर्विजयते ।

अपमपरो नागेशद्विषोऽविद्याविलासः ।

तथाहि अलङ्कारसर्वस्वकृदप्पय्यदीक्षितादीनां मतखण्डनप्रवृत्तेन जगन्नाथेनोक्तम् । यच्चालङ्कारसर्वस्वकृता तदनुगामिना कुवलयानन्दकृता च गुणक्रियासंबद्धत्वे गुणक्रियारूपैकधर्मान्वयः इति चोक्तं तदापाततः ( पृ० ४२४ । ४२५ ) ।

शासति त्वयि हे राजन्नखण्डावनिमण्डलम् ।
न मनागपि निश्चिन्ते मण्डले शत्रुमित्रयोः ॥

इत्यत्राभावरूपस्यैव धर्मस्यान्वयात् इति जगन्नाथः ।

अत्र नागेशः "किञ्च न मनागपि निश्चिन्ते इत्यत्र चिन्ताभावच्छेदस्य चिन्तानतिरिक्ततया गुणस्यैव साधारणधर्मत्वमित्यपि वक्तुं शक्यमिति । अत्र मन्दस्य कस्यचित्प्रलापः । चिन्ताभावस्याभावः चिन्तारूपः स्यात् नतु चिन्ताभाववतो धर्मिणोऽभावः । किञ्च

चिन्तारूपधर्मस्य मण्डलाभ्यां धर्मिभ्यामभेदान्वयो दुर्लभ इति-नागेशकृतं समाधानमाभासरूपमेव । ( सरला )

हा मूर्खते विदुषो वाधमाना चिरं विजयसे । अये नागेशाक्रोशक नात्र चिन्ताभाववतोऽत्यन्ताभावः प्रतिपाद्यते किन्तु चिन्ताभाववद्भेदस्तेन चिन्ताभाववद्भेदस्य चिन्तारूपता नैयायिकानां प्रसिद्धा सकलतन्त्राविरुद्धा च धर्मिभेदधर्मात्यन्ताभावयोः समनियतत्वात् इदं सर्वे दीपिकाध्येतारोपि जानन्ति । तथा च न निश्चिन्ते मण्डले इत्यत्र चिन्ताभाववद्भिन्ने मण्डले इति पर्य्यवसानात् कथं नाभेदान्वयः यदि मयि नाश्वासस्तदा पण्डितान् नैयायिकवालकान् वा पृच्छ किमर्थमनधिकृतं चेष्टसे । यस्मिन् कुले त्वमुत्पन्नो गजस्तत्र न हन्यते इति प्राचीनपद्यं न श्रुतं त्वयेति शिवम् । यदि समर्थोसि तदा विदुषां पुरोभूय नागेशाक्षिप्तान् रसगङ्गाधरांशान् समाधत्स्व । वृथाते भ्रान्तिः जगन्नाथः सर्वज्ञः न प्रमाद्येदिति । अद्यावधि पृथिव्यां न कापि माता तं पुत्ररत्नं समजीजनद्यो नागेशाक्षिप्तं रसगङ्गाधरं समादध्यात् । स नागेशःमशकेनानुहुङ्कारं पराजेतुमुपक्रान्तोऽहो मोहमहिमा ।

पृ० ४३२ तमे किञ्च नागेशद्रुहोऽभिधानं यत् पूर्वार्धेन उत्तरार्धेनेत्यादिका नागेशोक्तिस्तु भ्रामिकैव ।

अये भट्ट कौशिको दिवा सूर्य्यमण्डलेऽपि निष्प्रभत्वमनुभवति तत् कस्य हेतोः दिवान्ध्यात्तथैवाभ्रामिकां नागेशपदपंक्तिं भ्रामिकां पश्यतः प्रज्ञैव अपराध्यति । तथाहि

वासयति हीनसत्त्वानतिसत्त्वानुद्धतान् विवासयति इति वृत्तव्याख्याने सामान्यविशेषरूपायामप्रस्तुतप्रशंसायामेकस्याः क्रियायाः प्रकृतायाः इतरयोश्चाप्रकृतयोः साधारणन्तदिति रसगङ्गाधरग्रन्थं व्याचक्षाणेन नागेशेन पूर्वार्धेन सामान्यतो राजस्तुतिः उत्तरार्धेन विशेषत इति भाव इत्यन्तेन ग्रन्थेन अप्रस्तुतप्रशंसा

स्फोरयता शिष्याणां सन्देहो निरकारि तत्र अस्य भ्रान्तिरूपजाता उचितमेवैतत् मिष्टान्नपानं नतु गर्दभस्येति प्रवदन्ति लोकाः इति शिवम्

किञ्च ३८२ पृष्ठे शिशुभट्टाक्षेपः—मालोत्प्रेक्षोदाहरणे—

द्विनेत्र इव वासवः करयुगी विवस्वानिव
द्वितीय इव चन्द्रमाः श्रितवपुर्मनोभूरिव

इत्याद्युदाहरणे करयुगी घटकं करयुगं व्याचष्टे नागेशः करयुगम् भुजद्वयम्। अत्र करयुगीति पाठः भ्रान्तो भट्टः करयुग इति पाठं मत्वा अर्शआद्यचा व्यधिकरणबहुव्रीहिणावेति व्याचक्षाणो नागेशमुपहसति नागेशटीकातु नागेशटीकैवेति। अये भट्ट पाठप्रमां विना अर्शआदित्वकल्पना ते निर्मूला विदुषां हास्यायैवेति तूष्णीं भव। निर्मूला कल्पनाते असत्कल्पनेति गृहाण गौरवात् नागेशः करयुगीति पाठं मन्वानः श्रद्धेयस्सुधियाम्। वैयाकरणनिकुञ्चितो व्यधिकरणबहुव्रीहिर्वा इत्युक्तिस्तु तेऽयोग्यतादर्पणायमाना बालानामपि हास्यायैवेति गृहाण। न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर इत्यनुशासनविरोधात्कर्मधारयपदस्य बहुव्रीहीतरसमासपरत्वात्। इदं सर्वन्तवाश्रुतपूर्वमेवेति कथं त्वां बोधयामि।

किञ्च ४४१ तमे पृष्ठे प्रतिवस्तूपमाया लक्षणे वस्तुप्रतिवस्तुभावापन्नसाधारणधर्मकवाक्यार्थयोरार्थमौपम्यं प्रतिवस्तूपमा इत्येवं रूपे वाक्यार्थोपमायामतिव्याप्तिवारणार्थमार्थमिति विशेषणम्। उदाहरणञ्च दिवि भाति यथा भानुस्तथा त्वं भासि वै भुवि इत्यादि। एकस्यैव धर्मस्य पृथक् शब्दाभ्यामुपादानं वस्तुप्रतिवस्तुभावः। अत्र प्रत्युच्चारणं शब्दभेद इति नयेन, भाति भासि

इति पृथगुच्चारिताभ्यां वा शद्वाभ्यामेकस्यैव भानरूपधर्मस्य निर्देशाद्वस्तुप्रतिवस्तुभावः । तमबुद्ध्वा—भासि वै इति तु नागेशस्य भ्रम एवेति भट्ट प्रलापः । नहि भट्ट भ्रमः किन्तु सम्यगेव । भाति-भासिपदयोः पृथक्शद्वत्वमेव अत्रापि वस्तुप्रतिवस्तुभावापन्न एव धर्मउपात्त अत्र सर्वे विद्वांसः संप्रतिपन्नाः । किञ्च तव पाठे एकधर्मता कष्टसाध्या व्याप्यव्यापकभावापन्नयोर्द्रव्यत्वपृथिवीत्वयोरिव नैक-धर्मता संभविनीति भासि इत्येव पठितव्यम्, यत्त्वयोक्तम् भासि इत्युभयदल पाठे इति तत्तवप्रमाद एव नहि उभयदले भासीति नागेशपाठः अप्रमत्तो भव प्रकृतिमुपेहि तदा ज्ञास्यसीति शिवम् दिविभाति यथाभानुस्तथात्वं भ्राजसे भुवि इति भट्ट पाठोऽ-ज्ञानमूलः ।

यच्च पण्डितराजेन ७२ तमे पृष्ठे वन्धगाढत्वशिथिलत्वयोः क्रमेणावस्थापनं समाधिरिति समाधिं लक्षयित्वा—

**स्वर्गनिर्गतनिरर्गलगङ्गातुङ्गभङ्गुरतरङ्गसखानाम् ।**
**केवलामृतमुचां वचनानां यस्य लास्यगृहमास्यसरोजमिति ।**

उदाहृत्य व्याख्यातम् अवरोहः प्रथमेऽर्धे तृतीयचरणे त्ववरोहः इति रसगङ्गाधरीयं तृतीयचरणे त्ववरोह इत्यंशं व्याख्यत नागेशः । तृतीयचरणे इति वहुव्रीहिः द्वितीयेऽर्धे इत्यर्थः । इदं व्याख्यानमा-क्षिपन् साहित्याचार्य्यः प्रलपति विचार्य्योत्र नागेशः यस्य लास्ये-त्यादौ वन्धशैथिल्यस्याप्रतीते रिति । साहित्यकर्णधार भट्ट लोकोत्तर प्रज्ञोऽसि केवलामृत [illegible]ां वचनामित्यादाववरोहोऽस्ति नवा यदि नास्ति तदा कथं सम[illegible] रुदाहरणं यदि अस्ति तदा कथं क्रमेण द्वि-तीयचरणे तदभावादिति ग्रन्थानुपपत्तिं मनसि निधाय नागेश स्तृती-यचरण इतिपदं वहुव्रीहिणा उत्तरार्धपरतया विवृण्वन् पूर्वोक्ता माशङ्कां निराकरोति स ग्रन्थाशयानभिज्ञेनोपहसित इति सुधियो

शिवम्। एषैव दशा सर्वत्राक्षेपस्थले इति तत्र तत्र प्रकटीकृतमेव जानन्तीति नहि एष स्थाणोरपराध इति यदेनमन्धो न पश्यतीति निन्दातु न नागेशस्य किन्तु अज्ञशिरोमणेरेवेति शिवम्।

३३६ पृष्ठे रसगङ्गाधरे परिणामध्वनिविचारं प्रक्रम्य यत्ताव-द्विद्याधरोक्तं ध्वन्युदाहरणमनूद्यापय्यदीक्षितैर्दूषितम् तथाहि—

नरसिंह धरानाथ के वयं तव वर्णने।
अपि राजानमाक्रम्य यशो यस्य विराजते॥

अत्र राजशब्देन चन्द्रे विषये निर्दिष्टे तत्रारोप्यमाणस्य नृपस्य आक्रमणरूपकार्य्योपयोगिनः प्रतीतेः परिणामो व्यज्यते इति तदयुक्तम् तत्रहि आरोप्यमाणस्य नृपस्य नृपात्मनैवाक्रमणोपयोगः न चन्द्रात्मना इति (अप्पय्य दीक्षितः) तदसत् अत्र हि विजृम्भणं नाम न केवलं प्रागल्भ्यमात्रं कवेरभिप्रेतम् येन यशःकर्तृकाक्रमणे नृपस्य नृपात्मनैव कर्मतारूप उपयोगः स्यात् अपितु निरतिशय-नैर्मल्यगुणवत्तायां स्वसमानसजातीयद्वितीयराहित्यप्रयुक्तः प्रौढि-विशेषः। आक्रमणं तु न्यग्भावएव। एवं चैवंविधविजृम्भणे चन्द्रकर्मकमेवाक्रमणमुपयुज्यते नतु नृपकर्मकमिति विषयितया व्यज्यमानस्यापि नृपस्य चन्द्रात्मनैवाक्रमणोपयोग इति रमणीय-मेव विद्याधरेणोक्तम् परिणामव्यङ्ग्यतायामुदाहरणम् इति (रस-गङ्गाधरकृत्) अत्र रमणीयमेवेति प्रतीकमुपादाय—अत्रेदं चिन्त्यम्-राजशब्दस्यानेकार्थत्वात् विजृम्भतेश्च—प्रागल्भ्यत्वदुक्तार्थोभयपर-त्वात् प्रकरणादेश्च शक्तिसंकोचकस्याभावात् तन्त्रेण शक्त्यैव तुल्य-तयार्थद्वयोपस्थितौ सर्वदो माधवः पातु इतिवत् श्लेष एवायम् क वा नृपस्य व्यज्यमानतेति। प्रकृतनरसिंहराजोत्कर्षस्य च चन्द्र-कर्मकाक्रमणेनेवेतरनृपाक्रमणेनापि सूपपादत्वात्। अस्तु वा आरोप स्तथापि नृपस्यैवारोप्यमाणत्वं चन्द्रस्यैव विषयत्वमित्यत्र नियाम-

काभावः अत्रैव च दीक्षिततात्पर्य्यम्। अपिचप्रागल्भ्यस्यापि विजृम्भत्यर्थत्वेन प्रकृतार्थोपयोगिता नृपत्वेनापि नृपस्य संभवति। अतएव विद्याधरेणापि विषयिणः स्वरूपेण प्रकृतकार्य्यानुपयोगित्वे तदुपयोगाय विषयिणो विषयात्मना परिणामापेक्षायामेव परिणाम इत्युक्तम्—यदाह—

तं परिणामं द्विविधं कथयन्ति आरोप्यमाणविषयतया।
परिणमति यत्र विषयी प्रस्तुतकार्योपयोगायेति।

ननु तात्पर्य्यविषयीभूतप्रकृतकार्य्यानुपयोगित्वमस्त्येवेति चेत् तस्यैव तात्पर्यविषयत्वे मानं विभावयेति नागेशभट्टाः। अत्र लोकोत्तरमनीषी साहित्यमर्मज्ञो भट्टशिशुर्नागेशं पराक्रमते तथाहि रसगङ्गाधरं मनिसु निधाय प्रोक्तस्य "निर्गलितार्थस्त्वयम् राजानमाक्रम्य यस्य यशो विजृम्भते इत्युक्तौ कवेः श्लिष्टपदप्रयोगसंरम्भात् "प्रतिस्पर्धिनं राजानमाक्रम्य यथायं राजा विजृम्भते तथा अन्येषां राज्ञां यशउपमानत्वेन प्रसिद्धं राजानं ( चन्द्रं ) आक्रम्य ( न्यक्कृत्य ) अस्य यशोऽपि विजृम्भते इति प्राकरिणेकेर्थे पर्य्यवसिते चन्द्रपदेन राजरूपोऽप्यर्थः व्यञ्जनया बुध्यते।" (अये भट्ट केन चन्द्रपदेन तव बुद्धिगतेन पद्यगतेन वा चन्द्रपदेन। पद्येतु चन्द्रपदं नश्रूयते कथंप्रमाद्यसि स्वपिषि वा चन्द्रपदेन राजरूपोऽप्यर्थः इति वदसि अये नागेशनिन्दक इयती ते बुद्धिः एनयैव प्रगल्भसे प्रमत्त अयं प्रलापो ऽन्यद्वा किञ्चित्। एवं चन्द्रवाचके राजनि ( विषये ) नृपवाचकस्य राज्ञः विषयिणः अभेदः परिकल्प्यते ( सरला ) अये भट्ट चन्द्रवाचके राजनि इत्यस्य कोर्थः चन्द्रपदार्थ वाचके राजनि राजन्शब्दे इत्यर्थमभिप्रैषि तद्दूरापास्तम् स्वं रूपं शद्वस्य शद्वसंज्ञेति अनुशासनात् व्याकरणे एव शद्वानां स्वरूपपरतेति न तवाभिप्रेतसिद्धिः अतः प्रलाप एवायन्ते। अस्तु तुष्यतु

दुर्जनन्यायोऽत्र तथापि राजनि विषये राज्ञः विषयिणः अभेदः कथं परिकल्प्यते नहि शब्दो विषयी विषयः तथाच कथमभेदपरिकल्पना। तथा चेदं सर्वं तव प्रमत्तगीतम् बुधैरुपेक्ष्यम्। किञ्च दुर्बोध भट्ट विषये विषयिणोभेदः परिकल्प्यते अस्मात्को बोधः विषयानुयोगिकविषयिप्रतियोगिकाभेद इति चेत् तदा नायमभेदः परिणामे उपयुज्यते। अतोजगन्नाथो ब्रवीति अत्र च विषयाभेदो विषयिण्युप युज्यते। भवान् वदति विषये विषयिणः अभेदः। अत्रभवान् साधुवादी जगन्नाथोवेति त्वमेवनिर्धारय। किञ्च त्वत्कल्पनायां विषये विषयिणोऽभेदरूपायाम् प्रकृतोदाहरणे—**समन्तात्संतापं हरिनवतमालस्तिरयतु** इत्यत्र मार्गश्रान्तजनसंतापहारकतया रमणीयशोभाधारत्वाच्च तमालो विषयितयोपात्तः तस्य विषये हरौ आरोप्यमाणस्य भगवदात्मतया संसारतापनिवर्तनक्षमत्वमिति वदन्तं जगन्नाथं कथं संमानयेथाः। अये भट्ट केनरसगङ्गाधरे इदृक् शिक्षितोऽसि। अये भट्ट रसगङ्गाधराध्ययनस्यापि नाधिकारी त्वं किमर्थं दिगम्बरीभूय नागेशमाक्रोशसि। हा दैव किमिदानीं संजातम्। सत्वं—मूलनिर्मूलनाय यत्किञ्चिच्चेष्टाव्रती एव। नागेशस्तु शक्तिसङ्कोचकं प्रकरणाद्येव नास्तीति राजपदेनार्थद्वयमपि शक्तिबोध्यमित्याह भवांस्तु मदुक्तदिशा प्रकरणे प्रतीते नागेशस्य फुंकारः क्रियत्फलेग्रहिरिति विमृशन्तु सुधिय इति। भट्ट नहि त्वदुक्तदिशा प्रकरणप्रतीतिः। अये मन्द प्रकरणं तु प्रकृतस्य राज्ञः नरसिंहस्य' तत् राजानमाक्रम्येति अत्रत्यराजपदस्य चन्द्रतदितरपदार्थकस्य शक्तिसङ्कोचे कथं प्रभवेत्तथाचार्थद्वयस्याकुण्ठितोपस्थितौ श्लेष एवायमिति नागेशोक्तिस्तु समीचीनैव। अये मन्द किमप्रतीतस्यैव प्रकरणस्य शक्तिनियामकता। अये धीदरिद्र कियान् फलेग्रहिरिति ब्रूहि किमध्यापकत्वं कलङ्कयसि—अये भट्ट साहित्याचार्य्यपण्डितपुरुषोत्तमशास्त्रिणं चतुर्वेदमुपेत्य

रसगङ्गाधरमधीष्व पश्चाद्गिरिधरशर्मणोन्तिके किञ्चित्कालं संवाद्य मरुभाषायां मरुभाषाभाषिणां कृते रसगङ्गाधरं व्याख्यास्यसि। अये म० म० चतुर्वेद अयं तव प्रकाण्डपण्डितः इदृग् रसगङ्गाधरं व्याख्यातवान् येन मरुवास्तव्यानामपि अणुरुपकारो न स्यात् किं विदुषामिति विचिन्त्यैवमुदाहरामि यद्भवता प्रारम्भिकवक्तव्ये उक्तम् (अथापि ग्रन्थग्रन्थिभेदने विदुषां साहाय्यमाचरिष्यतीति दृढो मे विश्वास इति) तत्सर्वं मिथ्यैवेति।

अथापरमपि नागेशमाक्रोष्टुंमा क्रोष्टुरस्योत्थानमालोचयन्तु सुधियः अत्र भूमिकायाः पञ्चत्रिंशत्तमे ३५ पृष्ठे निवध्यमानम्। तथाहि—मुद्रितस्य रसगङ्गाधरस्य ४८९ पृष्ठे—

> उन्मूलितः सह मदेन बलाद्बलारे-
> रुत्थापितो बलभृतां सह विस्मयेन।
> नीलातपत्रमणिदण्डरुचा सहैव
> पाणौ धृतौ गिरिधरेण गिरिः पुनातु॥

अत्र गिरिधरेण मणिदण्डकान्त्या सह गिरिः पाणौ धृतः, मणिदण्डकान्तिः मणिदण्डे तिष्ठेत् (अये प्रलापिन् तिष्ठेदित्यत्र को लिङर्थः भट्ट तिष्ठतीति प्रयोज्यम्) स कथं पाणौ प्राप्नुयात् (भट्ट केन पाणाविति सप्तमी कश्च सप्तम्यर्थः? अये सुलेखक पाणिमिति प्रयोज्यम्।) अतएव अन्य उपमानधर्मस्य अन्यत्र उपमेये आरोपात् पदार्थनिदर्शनेति स्पष्टं सर्वेषां (अत्र त्वद्विधानामिति शेषः) किन्तु नागेशो व्याख्याति सदृशवाक्यार्थयोरैक्यारोपान्निदर्शना। अर्थात् वाक्यार्थनिदर्शना को वालङ्कारिको नोपहसेदिदम्। अत्रैव उन्मूलित इत्यस्य व्याख्यां करोति समूलं खण्डितः किन्तु गोविन्देन गोवर्धनः खण्डित इति नाद्यावाधि क्वापि पुराणे श्रुतम्। मद्बुद्ध्यनुसारम् उन्मूलित इत्यस्य समूलमुत्खातः (तिष्ठ-

तु तव बुद्धिः मान्द्यकर्दममग्ना किं तया प्रयोजनम् उत्खात इत्यस्य कोर्थः ) उत् ( उत्खात ) मूलं करोति उन्मूलयति ( णिच् ) इति व्याख्यानमुचितम् । ( प्रज्ञान्ध उदित्यस्य उत्खात इति व्याख्यानमभिप्रैषि, व्याख्याने उदित्यस्य कोर्थ इति पृच्छायां किमुत्तरं ते । भव तु ते ऽमन्दस्य इति व्याख्यानमुचितम् विदुषां तु दृष्ट्याऽतीवानुचितम् । तथाहि—उन्मूलित इत्यत्र भूतार्थनिष्ठायाः वर्तमानार्थकलटा, विवरणं कं न धीमन्तमुद्वेजयेत् । अहो विदुषस्ते व्याख्यानपद्धतिर्गिरिधरस्तुता जयति । अये विद्वन् भट्ट उदमूलि इति उन्मूलित इति व्याख्येयम् । अग्रे च ४८९ तमे मुद्रितपुस्तकपृष्ठे यत्प्रलपति भट्टस्तदाकर्णयन्तु सुधियः। तथाहि-गिरिधरेण मणिदण्डका न्त्यासह गिरिः पाणौ धृतः अर्थात् गिरिरपि पाणौ धृतः मणिदण्डकान्तिरपि पाणौ धृता ( अत्रापि दुर्मानी अर्थादितिप्रयुङ्क्ते न ज्ञायते कोस्यार्थः कुत्रचान्वेति अर्थादिति व्याधिरियं जाता मन्दस्य । समग्रेऽपि निबन्धे अर्थादिति प्रयुज्यमानं विफलमनर्थकं ग्रन्थकर्तुरयोग्यतापरिचायकञ्चेति । ) अङ्गुल्युपरि गिरिधारणकाले उर्ध्वीकृतः ( तिष्ठ प्रज्ञान्ध भट्ट अत्रैव तावत् भिषज्यामि ते बुद्धिम् । अङ्गुल्युपरि गिरिः धृत इति केन प्रतारितोऽसि । मूले तु पाणौ धृत इतिपठ्यते अस्येदं ते व्याख्यानं युक्तम् किं भट्ट पाण्यङ्गुल्योः पर्य्यायतां जानासि । शिष्यानपि एवं शिक्षयसि अहोगताऽस्तं विद्या । नागेशाक्रोशनपण्डितोऽसि किं ते वदामि अये वावदूक भट्ट उर्ध्वीकृत इत्यत्र कश्च्व्यर्थः उर्ध्वं कृत इति प्रयोगे कानुपपत्तिः ) कान्तिशाली वाहुस्तथा शोभते स्म यथा उपरि विस्तारितस्य छत्रस्य मणिदण्डो भवेदित्याशयः ( अये भट्ट भवेदित्यत्र कुत्रार्थे लिङ् ? नह्यत्र विध्यादिरूपः कश्चिदर्थो युज्यते तस्मादयोग्यतैवापराध्यति ते ईदृग् प्रयोगे ) । एवञ्च बाहौ मणिदण्डकान्तिरपि स्थिता गिरिश्चापि । ( पश्यन्तु सुधियोऽस्य भट्टस्य कोशज्ञानं पदशक्तिञ्च नं

व्याख्यानकौशलञ्च । मूलकारः पाणौ धृत इति निबध्नाति मन्द-भट्टश्च बाहौ मणिकान्तिरपि स्थिता गिरिश्चापि इति बाहुपाण्योरे-कार्थकत्वं विपर्य्यस्यन् बाहौ गिरिश्चापि इति व्याचष्टे युक्तमेवास्य विद्वद्द्रुहो व्याख्यानम्) किन्तु मणिदण्डकान्तिर्मणिदण्डे तिष्ठेत् (अये भट्ट मणिदण्डे तिष्ठति इतिप्रयोगार्हम्) सा कथं पाणौ प्राप्नुयादिति (अये व्याकरणशत्रो पाणिं प्राप्नुयादितिप्रयोगार्हम् प्राप्नोतेः सकर्मकत्वात् पाणेश्च कर्मत्वात्) इति अन्यउपमानधर्मस्य अन्यत्र-उपमेये आरोपात् पदार्थनिदर्शनेति पण्डितराजाशयः । सदृश-वाक्यार्थयोरैक्यारोपान्निदर्शनेति नागेशटीका तु आलङ्कारिकै (मूर्खैरितिशेषः) रुपहसनीया फल्गुफुंकारकल्पा (अहो पण्डित-राजाशयाभिज्ञता मन्दभट्टस्य कर्माधिकरणविभक्तिज्ञानेऽपि अयो-ग्यस्य । अये भट्ट पण्डितराजाशयस्त्वया कथमवाधारि कथं वा नात्र वाक्यार्थनिदर्शना कथं वा पदार्थनिदर्शनेति न त्वया सम्यग-वधृतम् । तथापि शृणु वचनीयम्—पदार्थनिदर्शनामुदाहरता जगन्नाथेन—

प्रसर्पत्पीयूषाम्बुधिलहरिलीलाविलसितो ।
दृगन्तस्ते मन्दं मम कलुषवृन्दं दलयतु ॥

इति उदाहृतम् ।

व्याख्यातञ्च दृगन्ताम्बुधिलहरिलीलयोराश्रयभेदाद्भिन्नयोरपि सादृश्यमूलस्ताद्रूप्याभिमान इत्यादि । निदर्शनासामान्यलक्षणञ्च उपात्तयोरर्थयोरार्थाभेद औपम्यपर्य्यवसायी निदर्शनेति । अन्यैः समानममरैस्त्रिपुरान्तकेत्यादिपद्यमुदाहृत्य एषा—वाक्यार्थनिदर्शने-त्युच्यते विशिष्टार्थयोः प्रकृतैकधर्मिगतयोरार्थाभेदे वाक्यार्थनिदर्श-नाया इष्टेरिति उज्जगार जगन्नाथः । अत्रापि उन्मूलितः सह मदेन बलाद्बलारेरित्यादिपद्येपि अत्र नीलातपत्रमणिदण्डरुचोर्गिरिधार-

णोत्तरकालिकत्वात् उत्तरार्धगता पौर्वापर्य्यविपर्य्ययानुप्राणितैव सहोक्तिर्निदर्शनानुप्राणिता चेति अभिदधौ। अत्र पण्डितराजाशय उत्प्रेक्ष्य: उत्प्रेक्षितञ्च नागेशभट्टैः सम्यगेव नह्येष स्थाणोरपराधो यदेनमन्धो न पश्यतीति। पदार्थनिदर्शना वाक्यार्थनिदर्शयोरिय- देवान्तरम् पदार्थनिदर्शनायामर्थयो:पदोपात्तत्वम् वाक्यार्थनिदर्श- नायाञ्च वाक्योपात्तत्वमिति। आर्थाभेद औपम्यपर्य्यवसायीति तूभयत्र समानम्। तथाचात्र विशिष्टार्थयोरुन्मूल्योत्थाप्यपाणिधृत- गिरिनीलातपत्रमणिदण्डरूपयोः प्रकृतपाणिधर्मिगतयोः सादृश्य- मूलाभेदस्य सूर्य्यवज्जागरूकत्वात् कथं न वाक्यार्थनिदर्शना कथं च न ते शिरसि पतेन्मूलकृतो विरोधदण्डः। अये मन्द वृथाप्रलापिन् नीलातपत्रमणिदण्डरुचोर्गिरिधारणोत्तरकालिकत्वादिति स्पष्टं निर्दि- शन् जगन्नाथः सर्वस्य पद्यस्यैकवाक्यतामभिप्रैति तथाच वाक्यार्थ- निदर्शनैवाभिप्रेता पण्डितराजस्य त्वन्तु अन्य धर्मस्यान्यत्रारोप एव पदार्थनिदर्शनेति पण्डितराजोक्तिमवुद्ध्वैव नागेशद्रोहं चिकीर्षसि धिकृते प्रज्ञाम्। नकोपि प्रज्ञाशाली मन्निर्दिष्टपदार्थनिदर्शनावाक्या- र्थनिदर्नयोर्भेदं विहाय किमपि वक्तुमुत्सहेत त्वामृते। पदार्थनिद- र्शनायामपि अर्थयोरार्थाभेदस्येष्टत्वादेव जगन्नाथेन पदार्थनिदर्शनो- दाहरणपद्येलीलयोराश्रयभेदाद्भिन्नयोरपि सादृश्यमूलस्तादात्म्याभि- मान इत्यभिहितम् इदञ्च व्यापकसामान्यलक्षणत्वात्सर्वाभिमतम् सर्वत्रानुगतञ्च। नहि निर्विशेषं सामान्यमिति नियमात्। तथा च भट्ट कथं फल्गुफुंकारकल्पा नागेशोक्तिः। अस्त्वेतावन्मात्रमत्र— लभेच्च सिकतासु तैलमपि यत्नतः पिबेच्च मृगतृष्णिकासु सलिल- मित्यादि हय्युंक्तिमनुस्मृत्य तव बोधनाद्विरमामि।

अपरञ्च भट्टकूर्दनं पश्यन्तु सुधियः तथाहि अत्रैव एवमेव अस्मिन्पद्ये उन्मूलित इति पदस्य समूलमुत्खात इति व्याख्या उचिता। समूलं खण्डितइति व्याख्यातु लोकोत्तर आविष्कारः

गोविन्देन गोवर्धनः खण्डित इति क्वापि पुराणे नाद्यावधि श्रुतम्। अहो महाशयत्वमेतस्येति सरलाजनकस्य प्रलापः। हंहो भट्ट उन्मूलित इत्यस्य समूलमुत्खात उत्खातमूलं करोतीति णिच इति उचिता व्याख्या केनाशिक्षि। भट्ट उत्खातमूलं करोतीतिणिच इति व्याख्या उन्मूलित इत्यस्य भवितुमर्हति प्रष्टव्योऽत्र चतुर्वेदः। नह्युत्खनतेः समूलवृक्षविभागे शक्तिः खनु अवदारणे इति व्याकरणादवदारणेएव। यदि नायमेवार्थो भवेत्तदाऽनर्थो भवेत्। पाताळाक्रान्तमूलस्य गोवर्धनस्य समूलविभागे महान् गर्तःस्यात्तदा कुत्र गोगोपानां रक्षणं स्यात्। किं गोवर्धनमुद्गतमूलं कृत्वा तस्माज्जाते महति गर्ते तस्मिन् गोगोपानां रक्षणं कृतवान् हरिः। एतदपि न श्रूयते पुराणेषु यत्पाताळावधि व्यापिनि महागर्ते गोगोपान्कृष्णः प्रावेशयदिति। अत उन्मूलमकारि अवादारीति उन्मूलितः मूलाद्वियोजितो गोवर्धनः कृष्णेन तस्य वियुक्तमूलभागे छत्रायमाणे च उर्ध्वभागे तयोरन्तरा प्रवेश्य भगवता गोगोपा रक्षिता इति कथं समूलं खण्डित इति नागेशव्याख्या पण्डितैरुपहसनीया। उर्ध्वं मूलादकारि व्ययोजि इत्यर्थे णिजन्तान्निष्ठा इतिव्याख्या समुचिता सुधिया सैव नागेशेन समसूचि इत्यलं मत्तैः सह विवादेन, अनु हुं कुरुते घनध्वनिं नतु गोमायुरुतानि केशरीति नीतिविरोधिनेति शिवम्। अये भट्ट नागेशस्य महाशयता त्वया विधिषणेन कथं परिच्छेतुं शक्या उद्बाहुवामनेन चन्द्रकरस्पर्शमिवेति सन्तोष्टव्यम्। अस्मिन् संस्करणे शुद्धताया महानभिमानः संशोधकस्य परन्तु बहूनि स्खलितानि उपलभ्यन्ते यथाऽत्रैव श्लोकव्याख्याने यथा गतेतु सहोक्ती इतिशेष इत्यत्र अस्य व्याख्यानं तूपेक्षणीयमिति विरम्यते॥ किञ्च भट्ट त्वया बहूपकृतं साहित्यसरोवरस्य।

## अथ सरलास्खलितानि भट्टयोग्यतापरिचयश्च॥

रसगङ्गाधरस्य काचिट्टीका केनचिल्लिखिता चतुर्वेदैः समर्थि-

ता च तत्र केवलं नागेशाक्रोश एव प्रधानम् । तत्राक्षेपान् समाधाय प्रथमं टीकाकर्तुर्योग्यतामेव सरलातःकानिचिदुदाहरणानि उद्धृत्य विदुषां विनोदायोपाहरामि । सरलाया मङ्गलश्लोके गणनाथे प्रणमते त्ययमंशः। अत्र गणनाथमिति द्वितीयैवोचिता । सप्तम्या असम्भवात् । प्रणामक्रियायाः गणनाथस्य अनाधारत्वात् इतिजानन्ति विद्वाँसः । सरलायां ४ पृष्ठे गुणालङ्कारादिभिः विशेषणैर्विशेष्यतया वोधनीये इति । अये नागेशाक्रोशक नहि विशेषणपदैर्विशेष्यतया वोध्यते विशेष्यम् नीलोघटः नीलमुत्पलमित्यादौ सर्वत्रैव विशेष्य तयाबोधनार्थम् विशेष्यपदमेव प्रयुज्यते । केन इदं शिक्षितं ते । अत्रैवमूले पृ० ४ तस्मिन्विशेष्यतावच्छेदकमितिनिबद्धम् । टीकाकृद्व्याचष्टे तस्य विशेष्यतावच्छेदकम् अर्थात्काव्यत्वम् । मन्दप्रज्ञमूलकारः काव्यलक्षणस्यैव विशेष्यतावच्छेदकत्वमभिप्रैति अतएव विशेष्यतावच्छेदकं तदितरभेदबुद्धौ साधनञ्च तल्लक्षणम् इति निबध्नाति । त्वया अर्थात् काव्यत्वमिति मूलविरुद्धं कथं व्याख्यायते । प्रसिद्धो हि अर्थो लक्षणत्वेन निर्दिश्यते इति शास्त्रसरणिः । यदि विशेष्यतावच्छेदकं काव्यत्वं भवेत्तदा तदेव तल्लक्षणपुरस्सरं निरूप्येत तथाच त्वद्व्याख्याने तल्लक्षणमित्यस्य काव्यत्वलक्षणमित्यर्थः स्यात्तथाच रमणीयार्थप्रतिपादकेत्यादिकाव्यत्वलक्षणं भवेत् तस्य कथं काव्यत्वे संगतिः स्यात् काव्यत्वे रमणीयार्थ प्रतिपादकत्वाभावात् । किञ्च अर्थात् काव्यत्वम् तदेव तदितरस्मात् अकाव्यात् काव्यस्य भेदबोधने साधनं भवतीति निबध्नता त्वया तदेव, इति प्राचीनास्वोक्तिः कथं संगमनीया । अमन्दप्रज्ञ विशेष्यतावच्छेदकं काव्यत्वमभिप्रैषि काव्यलक्षणं वा । आद्ये तदेव तदितरस्माद्भेदवोधने साधनं भवतीति तल्लक्षणं निरुप्यते इतिग्रन्थं कथं संगमयितासि । कुशाग्रबुद्धे गुणालङ्कारादिभिर्विशेषणैर्निरूपणीये व्युत्पादनीये तस्मिन् काव्ये तन्निष्ठा या विशेष्यतातदवच्छेदकं विशेष्य-

वृत्ति धर्मस्यानतिरिक्तवृत्तेर्विशेष्यतावच्छेदकत्वनियमात् इतरभेदबुद्धौ साधनम् हेतुः तस्मात्तदेव काव्यलक्षणमेव निरूप्यते इत्येवं व्याख्येयम् काव्यस्यभेदबोधने साधनं भवतीति त्वदीयव्याख्या नं समुचिता काव्येतरप्रतियोगिकभेदबोधने काव्यलक्षस्य स्वरूपासिद्धत्वात् नागेशाक्रोशक त्वदीयेनैतद्व्याख्यत्नेन शर्मैव प्रीयात् । अहोग्रन्थग्रन्थिभेदनकृत्त्वं भट्टव्याख्यानस्य पण्डितप्रकाण्डता चेदृश्येव भट्टस्येति विद्वांसएव विभावयन्तु । अथ रमणीयता च लोकोत्तराह्लादजनकज्ञानगोचरतेति मूलम् । तस्य सरला पृ० ४ लोकोत्तरो य आह्लादस्तज्जनकं यज्ज्ञानं ( भावना ) तद्गोचरता तद्विषयीभूतते त्यर्थः । भट्ट तद्गोचरता इत्यस्य तद्विषयतेति व्याख्यानमुपेक्ष्य तद्विषयी भूततेति व्याख्याने कं गुणं पश्यसि तं बोधय । भट्ट तद्विषयीभूतते त्यत्र च्विप्रत्ययेनैव भवनार्थप्रतीतौ भवतेः किमर्थः प्रयोगः केनव्याकरणेशिक्षितोऽसि । किं भट्ट अभूततद्भावेच्वेः स्मरणात् अतद्विषयस्य तद्विषयस्य भवनमिति अर्थः स्यात् तथाच सरमणीयोऽर्थः भावनाविषयो न भवति । तद्विषयिणी भावना तु चमत्कारजनिका भवति इति व्याख्यानं कः श्रद्दध्यात् मन्दमतीन् विना । किञ्च चमत्कारजनकभावनाविषयार्थप्रतिपादकशब्दत्वम् — इतिग्रन्थं व्याचक्षाणेन त्वया ५ पृष्ठे चमत्कारजनिका या भावना तादृशभावनाया विषयीभूतो योऽर्थः तत्प्रतिपादकशब्दः काव्यम् तत्त्वञ्च काव्यत्वम् इति यत्त्वयानिर्दिष्टम् तत्किं काव्यलक्षणम् यदि ओमिति तदा काव्यं काव्यस्य लक्षणम् इति पर्य्यवसन्नम् तथाच काव्यस्य काव्यधर्मत्वाभावात् लक्षणलक्षणस्याव्याप्तिः तत्त्वं च काव्यत्वमिति किमर्थं निर्दिशसि । अहो ग्रन्थग्रन्थिभेदनपटुता व्याख्यानस्य । नूतनैव व्याख्यासरणिः सरलाजनकस्य प्रकाण्ड पण्डितस्य ।

निभालयन्तु सुधियः जगद्गुरोर्नागेशस्य व्याख्याम् । इत्थंचेति

उक्तार्थसिद्धौ चेत्यर्थः। फलितमित्यत्रान्वयः। चमत्कारजनकभावनाविषयार्थप्रतिपादकशब्दत्वम्। १। यत्प्रतिपादितार्थविषयकभावनात्वं चमत्कारजनकतावच्छेदकं तत्त्वम्। २। स्वविशिष्टजनकतावच्छेदकार्थप्रतिपादकतासंसर्गेण चमत्कारत्ववत्त्वमेव वा काव्यत्वमिति फलितम् इति मूलम्। (व्याख्या—यत्किञ्चिच्चमत्कारजनकज्ञाने समूहालम्बनविधया भासमानान्यार्थप्रतिपादकशब्दे काव्यत्व वारणाय ज्ञानेत्यपहाय भावनेत्युक्तम् शब्दत्वमित्यस्य काव्यत्वमित्यत्रान्वयः। धारावाहिकसकलज्ञानविषयतादृशार्थप्रतिपादकेवाक्येऽतिव्याप्तेराह यत्प्रतिपादितेति। यादृशानुपूर्वीप्रतिपादितार्थविषयकत्वविशिष्टभावनात्वं तज्जनकतावच्छेदकं तादृशानुपूर्वीमत्वमित्यर्थः तेन नोक्तदोषः। लाघवादाह स्वेति स्वं चमत्कारत्वम्। जनकतावच्छेदकार्थेति। अर्थे भावनानिष्ठजनकतावच्छेदकता विषयतासम्बन्धेन बोध्येत्यादि। (मर्मप्रकाशः) अत्र निन्दकभट्टस्य व्याख्या। "येनयैर्वा शब्दैरुपस्थापितस्य (अर्थात् यादृशानुपूर्वीप्रतिपादितस्य) अर्थस्य भावनया (पुनः पुनरनुसन्धानेन) चेतसि चमत्कारजननं भवति (अये मन्दभट्ट चेतसि चमत्कारो भवति चमत्कारो वा जायते इत्येतावन्मात्रं वक्तव्यम् चमत्कारजननं भवति इति किमर्थं व्याख्यायते बालोसि न जानासि व्याख्यामार्गं नागेशाक्रोशनमेव शिक्षितोऽसि) इत्याशयः। एवं सति सकलया आनुपूर्व्या यत्र चमत्कारो नोत्पद्यते किन्तु धारावाहिकरूपेणान्यदपि अचमत्कारोऽपि प्रतीयते तत्स्थलस्य निरासः। (इयंसरला) नागेशव्याख्याव्याख्यातु पश्चाद्भविता इदानीं सरला परीक्ष्यते। नागेशव्याख्याहरणप्रवृत्तस्यास्य अन्धकारे हरणप्रवृत्तस्य चौरस्य गृहकोणप्रक्षिप्तावकारस्य लाभ इव अस्यापि अनर्थस्यैव लाभः नतु कस्यचिदिष्टस्य। तथाहि प्रथमलक्षणे ज्ञानमपहाय गुरुभूतभावनानिवेशस्य यत्फलं नागेशेनोक्तं रत्नभूतं तदपहाय

द्वितीयलक्षणार्थहरणे प्रवृत्तस्यावकरलाभेन तुष्टस्य इदं विवरणं चेतसि चमत्कारजननं भवति (अत्र जननभवनयोः पर्य्यायत्वात् चमत्कारभवनं भवति इति विवक्षितोऽर्थः किम् अहो हृदयहीनस्य पाण्डित्यम् पश्यन्तु सुधियः अयं नागेशं फल्गुशब्देन व्यपदिशति अहोधाष्ट्र्यम्। तादृशचमत्कारजनकताया अवच्छेदकं तादृशशब्दानुपूर्वीमत्वमेव काव्यत्वं भवतीत्याशयः। (भट्टाशय इत्यर्थः) अत्र विद्वांसो विभावयन्तु निरुक्तार्थविषयकभावनायामस्ति चमत्कारजनकता तदवच्छेदकं च भावनात्वम्। तादृशानुपूर्वीमत्वं तु अर्थप्रतिपादकशब्देऽस्ति तथासति निरुक्तजनकताया अवच्छेदकत्वं तु न तस्य। जनकतानतिरिक्तवृत्तिधर्मस्यैव जनकतावच्छेदकत्वात्। अतएव मूले निरुक्तभावनात्वस्यैव जनकतावच्छेदकत्वं निर्दिष्टम् तदपश्यता प्रज्ञावता आनुपूर्वीमत्त्वं जनकतावच्छेदकतया निर्दिष्टम् अहो, अनधिकारिणो धाष्ट्र्यम्। अहो अस्यशास्त्रश्रमः म० म० चतुर्वेदसंस्तुतः। धृष्टते विजयसेऽलम्। अपरञ्च विभावयन्तु सुधियोऽस्य पदेपदे स्खलनम्—तथाहि एवं सति सकलयाऽनुपूर्व्या यत्र चमत्कारो नोत्पद्यते किन्तु धारावाहिकरूपेणान्यदपि (अचमत्कारोऽपि भासते प्रतीयते तत्स्थलस्य निरासः। इदं सर्वं नागेशव्याख्यापहतुरज्ञस्यासंवद्धप्रलापः नहि कश्चिदस्यार्थः संभवति।

तथाहि—भट्ट यत्र सकलयानुपूर्व्या चमत्कारो नोत्पद्यते इति किं जल्पसि आनुपूर्वी चमत्कारजनिका भावना वा भावनैव तु चमत्कारजनकतया मूले ग्रन्थकर्त्तृ निवद्धा तां विहाय प्रमत्त इव प्रलपतः क गता ते प्रज्ञा। नागेशग्रन्थमपहृत्य यदि जल्पसि तदा नागेशग्रन्थे तु तादृशविशिष्टभावनात्वं चमत्कारजनकतावच्छेदकतया निवद्धं तदवुद्ध्वा तादृशचमत्कारजनकतावच्छेदकं तादृशानुपूर्वीमत्त्वमिति वदन् कथं प्रमाद्यसि। यदि मद्वचनं न श्रद्दधासि तदा अन्यं कमपि विद्वांसं परिपृच्छेति। किञ्चाग्रे एवं सति सकलया

आनुपूर्व्या यत्र चमत्कारो नोत्पद्यते ( किं भट्ट जानासि कुत्र चमत्कारो नोत्पद्यते उदाहर्तुं प्रभवसि तदिति ) किन्तु धारावाहिकरूपेणान्यदपि ( अचमत्कारोऽपि प्रतीयते इत्यादि विवरणं प्रमत्तप्रलापत्वादुपेक्ष्यमेव नहि भट्टोऽपि अमुं ग्रन्थं व्याख्यातुं प्रभवति किमुतान्य इति उपेक्ष्यमेव ) अतः परं गुरुमर्मप्रकाशं व्याचष्टे भट्टः। एतल्लक्षणस्य हि लक्ष्यं काव्यमित्यादि। तदपि नागेशाशयानभिज्ञस्य नागेशाशयं विवृण्वत उपेक्ष्यमेव किमयं मन्दो नागेशाशयं व्याचष्टाम् यः गुरुमर्मप्रकाशपाठसंशोधनेऽपि अप्रभुः अत्र "मर्मप्रकाशः एवं मुद्रितः। "लक्ष्यतावच्छेदकं चैतत्समानाधिकरणं काव्येत्याद्यनुगतव्यवहारेणास्वादजनकतया च सिद्धजातिविशेषरूपमुपाधिरूपं वा काव्यत्वं बोध्यम् इति" अयमपपाठः आस्वादजनकतावच्छेदकतया च सिद्धमिति साधुःपाठः तं शुद्धपाठमज्ञात्वैव पाठशोधनाभिमानिना अशुद्धं पाठं व्याचक्षाणेन मुखेनैव स्वलितम्।

यदाहुर्मान्याः विवेकभ्रष्टानां भवति विनिपातः शतमुख इति।

एष हि नागेशाशयः नागेशेन लक्ष्यतावच्छेदकलक्षणयोरैक्यमाशङ्क्य अनुगतव्यवहारेण आस्वादोद्बोधजनकतावच्छेदकतया वा सिद्धं जातिविशेषरूपमखण्डोपाधिर्वा लक्ष्यतावच्छेदकं, निर्दिष्टञ्च मूले लक्षणमिति तयोर्विभागमभिप्रैति सर्वं चैतन्मम मर्मप्रकाशप्रभायां स्पष्टं भविष्यतीतिसन्तोष्टव्यमवसरं प्रतीक्षमाणैरिति शिवम्।

इदमपरं नवभट्टस्य व्याख्यानं विभावयन्तु सुधियः नूतनमुद्रितरसगङ्गाधरपुस्तकस्य ६ षष्ठे गुरुमर्मप्रकाशस्याधोलम्बमानायां सरलायां लघुभूतं लक्षणमाह स्वविशिष्टजनकतेति ( भट्ट नेदं लक्षणं किन्तु लक्षणघटकचमत्कारत्ववत्वस्य सम्बन्धः सचाकाङ्क्षाभास्यः तदनिवेशकृतमेव लाघवमस्मिंल्लक्षणे इति मन्दं मन्दं गृहाण। ) अयं भावः चमत्कारत्ववत्वमेव काव्यत्वम् चमत्कारत्ववत्त्वञ्च स्वविशिष्टजनकतावच्छेदकार्थप्रतिपादकतासंसर्गेण ग्राह्यम्। एता-

वान् मूलानुवादः अत्र स्वं चमत्कारत्वम् तादृशचमत्कारत्वविशिष्टा (अस्य प्रथमान्तस्य कुत्रान्वयइति न ज्ञायते)विषयतासम्बन्धावच्छिन्ना अर्थनिष्ठा या भावनानिष्ठजनकतावच्छेदकता तद्रूपेण संसर्गेणेत्याशयः। प्रज्ञान्ध तादृशचमत्कारत्वविशिष्टा, अर्थनिष्ठा जनकतावच्छेदकता भावनानिष्ठजनकता वा अत्र वैशिष्ट्यं केन सम्बन्धेन। कथं वा चमत्कारत्ववत्ता काव्यत्वस्य। नहिभवन्निर्दिष्टसम्बन्धेन सा संभवति मूलकारस्तु प्रतिपादकतासंसर्गेण चमत्कारत्ववत्त्वं काव्यत्वे प्रतिपादयति रसगङ्गाधरमर्मज्ञेन त्वया तु तादृशजनकतावच्छेदकता संसर्गेण तद्वत्ता व्याख्याता। भट्ट कथमवच्छेदकता संसर्गेण शब्दरूपे काव्ये तत्त्वं गच्छेत्। टीकां कर्तुं प्रवृत्तोऽसि स्वरूपं वा परिचाययितुम्। अहो ग्रन्थिभेदनपटुता भवन्निग्रन्धस्य। किं भट्ट "नपादपोन्मूलनशक्ति रंहः शिलोच्चये मूर्छति मारुतस्येति" कालिदासोक्तिरपि विस्मृता त्वया सोयं स्वीयेन करेण स्वशिरसि कुठारप्रहारः। प्रज्ञातं ते पाण्डित्यम्। किञ्चापरमपि विभावयन्तु सुधियः सरलासौष्ठवम् सरलायां २० तमे पृष्ठे गुणीभूतव्यङ्गस्योदाहरणमयंसरसनोत्कर्षीत्यादिपद्यमभिप्रैति भट्टः काव्यज्ञानां शिरोमणिः अये भट्ट यत्त्वयात्रोक्तम् अयं सरसनोत्कर्षीत्याद्यपराङ्गोदाहरणेषु वाच्यार्थापेक्षया शृङ्गारस्य प्राधान्यमस्तीति ध्वनिकाव्यत्वमस्याव्याहतम् इति इदं प्रदीपकृन्मते रसगङ्गाधरकृन्मते वा प्रदीपकृत्तु अमुं गुणीभूतमभिप्रैति व्याचष्टे च यदत्रैवानुपदं निबद्धं। रसगङ्गाधरकृत्तु द्वितीयकाव्यभेदं लक्षयन् वाच्यापेक्षया प्रधानीभूतं व्यङ्ग्यान्तरमादाय गुणीभूतम् व्यङ्ग्यमादायातिव्याप्तिवारणायावधारणमिति व्याचक्षाणः कथंमस्य ध्वनित्वमभिप्रैति भवानेव वेत्तु "तेन तस्य ध्वनित्वमेवेति परोक्त्या प्रतोरितोऽसि किं। नहिरसगङ्गाधरकृदपराङ्गोदाहरणस्य ध्वनित्वमभिप्रैत्यत्र। तेन तवात्रनागेशोपालम्भो न शुभकृदित्यवेहि।

किंच २० तमे पृष्ठे चित्रान्यत्वमिति प्रतीकमुपादाय वाच्य-

चित्रादि अलङ्कारप्रधानक काव्यभिन्नत्वमिति भट्टव्याख्या। अत्र-समासेऽपि भट्टेन असन्धि प्रयुक्तम्। अये भट्ट सन्धिप्रकरणं पठ-पश्चान्नागेशं क्रोष्टा।

२२ तमे पृष्ठे तृतीयकाव्यलक्षणव्याख्याने भट्टमलिनोद्गारं विभावयन्तु सुधियः। "यत्र व्यङ्ग्यचमत्कारासमाधिकरणो वाच्यचमत्कारस्तत्तृतीयमिति लक्षयति जगन्नाथः। तं भट्टो व्याचष्टे व्यङ्ग्यकृतचमत्कारस्य असमानाधिकरणः (असहवासी) व्यङ्ग्यचमत्कारापेक्षया वाच्यचमत्कारः स्पष्ट उत्कृष्टश्च यत्र स्यात् इत्याशय इत्यन्तेन। अहो भट्ट कथं मूलानुरोधि तव व्याख्यानं मूलकृत्त्वत्र सर्वथा व्यङ्ग्यचमत्कारस्याभावं वदति। लोकोत्तरप्रज्ञेन त्वया व्यङ्ग्यचमत्कारापेक्षया वाच्यचमत्कारस्य उत्कृष्टत्वं स्पष्टत्वं च व्याख्यातं धन्या ते शिक्षा। एतादृशो एव ते सर्वत्र सरला मलिना पूतिगन्धा चेत्यलम्।

किञ्चात्र २६ तमे पृष्ठे अन्तःकरणधर्माणां साक्षिभास्यत्वं व्याचक्षाणेनानेन भट्टेन रसगङ्गाधर कुठारेण या साक्षिभास्यत्वपदव्युत्पत्तिः प्रदर्शिता तदस्य वैदुष्यदर्पदर्पणमेव निभालयन्तु सुधियः। साक्षादात्मना भास्यत्वम्। (अये धीधन अस्मिन्विग्रहे साक्षाद्भास्यत्वमिति स्यात् क्व गता प्रज्ञा) अयं भावः आन्तरिकधर्मेतरान् घटपटादिपदार्थान् अन्तःकरणसंयोगेनायमात्मा प्रकाशयति रत्युत्साहादीनन्तःकरणधर्मांस्तु साक्षादयमात्मैव प्रकाशयति इति साक्षिभास्यत्वव्यपदेशः (अहो भट्टस्यास्य साक्षिभास्यत्व व्याख्या तु लोकत्रयविलक्षणेति जानन्त्येव सुधियः)। किञ्चात्रैव २६ तमे पृष्ठे विभावादीनां साक्षिभास्यत्वोपपादिका युक्तिरपि हृद्यैव भट्टस्य तथाहि ननु वासनारूपतयाऽन्तःकरणधर्माणां रत्यादीनामस्तु साक्षिभास्यत्वमिति भट्टोक्तिः। अयेभट्ट रत्यादीनां साक्षिभास्यत्वेऽन्तःकरणधर्मत्वं प्रयोजकम् वासनारूपता वा यद्याद्यस्तदा कालाकाशादीनामनन्तःकरणधर्माणां साक्षिभास्यतया वेदान्तिभिरभ्युपगतानां कथं साक्षि-

भास्यता। वासनारूपता चेत्तदा सिद्धान्तविरोधः कैश्चिदप्यौपनिषदैस्तेषां साक्षिभास्यता न स्वीक्रियते। किञ्चान्तःकरणसंयोगेनात्मा बाह्यानर्थान् प्रकाशयति रत्यादीनन्तःकरणधर्मास्तु साक्षादयमात्मैव प्रकाशयति इति साक्षिभास्यत्वव्यपदेशः इति भट्टव्याख्या। किं भट्ट साक्षाद्भास्यते इति साक्षिभास्य इति व्युत्पत्तिमुरीकरोषि केन वैदिकेन व्याकरणे शिक्षितोऽसि। अनुदाहरणोऽसि न कापि वाच्यता त्वयि अवाच्य इति उपेक्ष्यसे। किंच शकुन्तलादीनां भौतिकपदार्थानां विभावादीनां तु कथं साक्षिभास्यत्वमित्याह स्वप्ने तुरगादीनामितिभट्टः। अये भट्ट शकुन्तलादीनां भौतिकपदार्थानां विभावता केन शिक्षिता नहि भौतिकपदार्थानां विभावता कुत्रापि मम्मटादिभिरुपन्यस्ता। काव्योपस्थापितानामेव विभावनादिव्यापारयोगाद् विभावादिता भवति। तदुक्तं मम्मटभट्टैः कारणान्यथ कार्याणि सहकारीणि यानि च। रत्यादेः स्थायिनो लोके तानिचेन्नाट्यकाव्ययोः। विभावा अनुभावास्तत्कथ्यन्ते व्यभिचारिणः। व्यक्तः सतै विभावाद्यैः स्थायीभावो रसः स्मृतः। भावनोपस्थापितानां शकुन्तलादीनां भौतिकत्वं वदन् भवान् भूतेश्वर एव। किञ्चभावनामयानांविभावनादीनां साक्षिभास्यत्वे न कोऽपि विरोध इति स्वोक्तिविरुद्धञ्च। किञ्च भावनामयानां साक्षिभास्यत्वमिति त्वदुक्तिरपि असमञ्जसा भावनोपस्थापितानामितिवाच्यम् नहिभावनायाः साक्षिभास्यता केनापि स्वीक्रियते अनुमेयत्वात्तस्याः।

किञ्च २७ तमे पृष्ठे आनन्दो ह्ययं न लौकिकसुखान्तरसाधारणः अनन्तःकरणवृत्तिरूपत्वादिति मूलग्रन्थं व्याचक्षाणेन भट्टेन यदुद्गीर्णं तद्विमृशन्तु सुधियः (अन्यानि सुखानि अन्तःकरणवृत्त्यवच्छिन्नचैतन्यरूपाणि रसस्तु अन्तःकरणवृत्त्यवच्छिन्नचिदात्मको न अपितु शुद्धचैतन्यात्मकः अस्यानुभवे चित्तवृत्तिरानन्दमयीभवति अयि भट्ट अस्यानुभवे चित्तवृत्तिरानन्दमयी यदि भवति तर्हि तव रसस्य

न स्वप्रकाशता चित्तावृत्त्यानुभूयमानत्वात् किञ्च यस्यानुभवे वृत्ति-र्भवति सोऽन्तः करणवृत्त्यवच्छेदरहितः कथमिति भवानेव वदतु। अत्रपृच्छामि भट्ट आनन्दमय्याः वृत्तेर्भवनेऽपि कथं वृत्त्यवच्छे-दराहित्यम्। अस्यानुभवे आनन्दमयीवृत्तिरस्तु तदवच्छेदः किंदण्ड-वारितो भवति किं प्रमत्त इव जल्पसि सर्वथा विषयानभिज्ञोसि नागेशाक्रोशक केन वेदान्ते शिक्षितोऽसि अये पण्डितप्रकाण्ड अन्तःकरणधर्मस्यापि सुखस्य यदि सात्तिभास्यता तदा आत्मस्वरूप-सुखस्य वृत्तिभास्यतेति अनुन्मत्तः कोब्रूयाद्भवन्तमृतेइत्यलं पङ्कमथ-नेन। म०म०चतुर्वेदसमर्थिता तव सरला अतीव प्रलापिनीति चतुर्वेदमुदे एव भूयादितिशम्।

विलोकयन्तुसुधियः सरलासौष्ठवमपरम्—

२८ तमे पृष्ठे अप्रामाण्यनिश्चयानालिङ्गितागम्यात्वप्रकारकज्ञान विरहस्य विशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकस्य विभावता-वच्छेदककोटावश्यं निवेश्यत्वात् अन्यथा स्वस्रादेरपि कान्तात्वा-दिना तत्त्वापत्तेरितिमूलम्—

त द्व्याचक्षाणेन भट्टेन इदं व्याख्यातम्। शृङ्गारे कान्तादेर्वि-भावतावच्छेदककोटौ (अर्थाद्विभावत्वनिर्धारणे) (अहो अपूर्वा व्याख्या पण्डितंमन्यस्य) समवायसम्बन्धावच्छिन्ना प्रतियोगिता यस्य इदृशस्य अप्रामाण्यनिश्चयेनास्पृष्टस्य इयमगम्याऽस्ति इत्या-कारकस्य ज्ञानस्याभावोऽवश्यं निवेश्यः। अयंभावः कान्तायाः शृङ्गाररसे विभावत्वं तदा भवेत् यदा इयमगम्या नास्तीति प्रामा-णिको निश्चयः स्यात् इति सरला। पश्यन्तु दोषज्ञाः मूलका-रो निवध्नाति विशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकस्य भट्टो व्या-चष्ट समवायसम्बन्धावच्छिन्नप्रतियोगिताकस्येति। अयं पण्डितं-मन्यः विशेष्यतासमवाययोः समानार्थतां विपर्य्यस्यति। क्विमती योग्यताऽस्य रसगङ्गाधरव्याख्याने किञ्च समवायसम्बन्धावच्छा-

वच्छिन्नप्रतियोगिताकस्य निरुक्ताभावस्य स्वस्नादौ विशेष्ये सत्त्वात् कथं न स्वस्रादीनां विभावत्वम्। मन्द पृच्छकमपि विद्वांसं समवायेन तद्भावः कन्यादावस्ति नवेति। अयेमन्द रसगङ्गाधरं कथं प्रहरसि परिचिता ते योग्यता एतद्ग्रंथाध्ययनेपि नाधिकुरुषे।

किञ्चात्रैव २९ पृष्ठे कान्तायाः शृङ्गाररसे विभावत्वं तदैव भवेत् यदा इयमगम्या नास्तीति प्रामाणिको निश्चयः स्यात् (सरला) भट्ट एवं न वाच्यम् यस्येयमगम्येति निश्चयो न तस्यापि कान्तादौ शृङ्गारे विभावत्वमिष्टम् त्वद्व्याख्याने न स्यात्तादृशनिश्चयाभावादिति कथं तत्र विभावत्वं संगमयितासि मूलकारस्तु अगम्यात्वप्रकारकज्ञानाभावस्यैव विभावतावच्छेदकोटौ प्रवेशमाह भवांस्तु इयमगम्या नास्तीति प्रामाणिकस्यनिश्चस्य द्वयोः कः साधुवादी इति निश्चिनुषे। हन्त हतो रसगङ्गाधरः अनर्थकारिणा भट्टेनेति स्पष्टम्।

३० पृष्ठे पश्यन्तु सुधियः :रसग्रन्थे रसगङ्गाधरव्याख्यां भट्टस्य भावनाविशेषरूपदोषस्य महिम्ना कल्पितदुष्यन्तत्वावच्छादिते स्वात्मनि समुत्पद्यमानोऽनिर्वचनीयः साक्षिभास्यः शकुन्तलादिविषयकरत्यादिरेव रसः अयं च कार्यो दोषविशेषस्य नाश्यश्च तन्नाशस्य स्वोत्तरभाविना लोकोत्तराह्लादेन भेदाग्रहात्सुखपदव्यपदेश्यो भवति च पूर्वोपस्थितेन रत्यादिना भेदाग्रहात् त्तद्रतित्वेनैकत्वाध्यवसानाद्वा व्यङ्ग्यो वर्णनीयश्चोच्यते। इति मूलम्।

अस्य सरला। रसोत्पत्तेः पूर्वं शकुन्तलादिषु दुष्यन्तादेर्या रतिर्व्यञ्जनया गृह्यते तया साकं स्वात्मनि कल्पिताया रतेः (प्रेम्णः) अभेदो भवति इति अयमपि रसः व्यङ्ग्यो वर्ण्यश्च प्रतीयते इत्याशयः (सरला टीका) अवच्छादकत्वञ्च रत्यादिविशिष्टबोधे विशेष्यतावच्छेदकत्वम् (मूलम्) भट्टव्याख्या—रत्यादिविशेषणक शाद्बबोधे विशेष्यतावच्छेदकत्वम्। अर्थात् मत्सवन्धिन एव रत्यादयः सन्तीति आत्मनि रत्यादीनां विशेष्यता कल्पनम् एव अव-

च्छेदकत्वमित्याशयः इति सरला। अत्रेदं विमृश्यम्। रसोत्पत्तेः पूर्वं शकुन्तलादिषु या दुष्यन्तादिरतिः गृह्यते सा व्यञ्जनया गृह्यते तर्हि तस्य रसत्वमेव "व्यक्तः सतै र्विभावाद्यैः स्थायीभावो रसः स्मृत" इतितल्लक्षणानुगमात् तथाच रसोत्पत्तेः पूर्वमिति व्याख्यानं प्रलाप एव। "तया साकं स्वात्मनि कल्पितताया रतेः अभेदो भवति" इति व्याख्यानमपि मूलविरुद्धमसङ्गतञ्च। तथाहि मूलकारः कल्पित-दुष्यन्तत्वादिनाववच्छादिते आत्मनि इति निर्दिशन् स्वात्मनि-दुष्यन्तत्वकल्पनामेवाभिप्रैति भट्टस्तु कल्पितताया रतेरिति व्याचष्टे। स्वपूर्वोपस्थितेन रत्यादिना तदग्रहात् ( भेदाग्रहात् ) तद्रतित्वेनैक-त्वाध्यवसानाद्वा इति मूलकारो निबध्नाति। सामाजिकनिष्ठायाः रतेः स्वपूर्वोपस्थितेन रत्यादिना भेदाग्रहमेकत्वाध्यवसानं वा वदति। भट्टो व्याचष्टे स्वात्मनि कल्पितताया रतेः इति स्वगताया रतेरेव चर्वणा भवति नान्यगताया निर्वासनस्य रसास्वाद एव न जायते इति आलङ्कारिकसमयः। भट्टस्तु स्वगतां रतिं कल्पितामिति वदति अहो मोहमहिमा। अयेभट्ट नागेशयशोपहर्तुं स्वयशःसम्पादयितुं-वा प्रवृत्तोऽसि उभयमपि ते "न पादपोन्मूलशक्ति रंहोन्यायेन दुर्ल-भमेवेति कूर्दनाद्विरम।

किञ्चात्रैव अवच्छादकत्वञ्च रत्यादिविशिष्टबोधे विशेष्यताव-च्छेदकत्वम्। इति मूलम्। रत्यादिवशेषणकशाब्दबोधे विशेष्यताव-च्छेदकत्वम् इति सरला। अये भट्ट त्वां विहाय रत्यादिविशिष्टबोधे-इत्यस्य रत्यादिविशेषणकशाब्दबोधे इतिको व्याचक्षीत। सुधीरसि सर्वं त्वयि युज्यते। अये भट्ट रत्यादिविशिष्टबोधस्य सामाजिकनिष्ठस्य ब्रह्मापि शाब्दबोधतां समर्थयितुमनीशः किं भवान् सन्धिज्ञानेऽपि अप्रभुः। अये भट्ट "अर्थात् मत्सम्बन्धिन एव रत्यादयः सन्तीति आत्मनि विशेष्यताकल्पनम्" इदमेवतत्स्वरूपम् केन लोकोत्तरधिष-णेन प्रतारितोसि तर्हि भट्ट रसगङ्गाधरं समूलघातं हंसि। अये भट्ट

सा कल्पनातु ईदृशी दुष्यन्तोहं शकुन्तलाविषयकरतिमानिति नतु मत्सम्बन्धिन एव रत्यादयःसन्तीति, त्वद्व्याख्यानं दृष्ट्वा त्रपापि त्रपते किमु सहृदयः। अयं बोधो न शाब्दबोधो भट्ट इति ग्रहाण इयमेव पद्धतिः सरलाः व्याख्यायाः अनया को व्युत्पाद्येत्।

यच्च भट्ट ते सरला भावनाविशेषमहिम्नेत्यारभ्यइत्याशय इत्यन्ता सा कस्याशयं किमुच तद्व्याचष्टे इतिभवानेव वेत्तु।

प्रतिवादिशङ्कानां समाधानं तु त्वदाशयवर्णनं विनापि स्पष्टं किमु जलताडनं कुरुषे। स्वात्मनि दुष्यन्तत्वबुद्ध्या दुष्यन्तादिनिष्ठ-स्यरतेरनास्वाद्यता,इतिशङ्कांशः परिहृतः। स्वपूर्वोपस्थितेन रत्यादिना तद्ग्रहादित्यादिनाच स्वीयाया एव रतेश्चर्वणात् स्वनिष्ठस्य तु तस्य शकुन्तलादिभिरतत्सम्बन्धिभिः कथमभिव्यक्तिरिति दोषांशोऽपि स्वस्मिन् दुष्यन्ताभेदग्रहेण परिहृतोभवति इति आशयः प्रतिवादि-शङ्काप्रतिक्षेपग्रन्थस्येति शिवम्।

३१ पृष्ठे सरलायाम् इष्टं शैत्यजन्या निर्वृतिस्त्वधिका इति-व्याख्या अत्र इष्टा शैत्यजन्या निर्वृतिस्त्वधिकेति प्रयोज्यम् अन्यथा-ऽध्यापकत्वं कलङ्कतामेति।

किंच३२तमे पृष्ठे विलक्षणो हि कमनीयः काव्यव्यापारज आस्वादः प्रमाणान्तरजादनुभवात् जन्यत्वं च स्वजन्यभावनाजन्य-रत्यादिविषयकत्वम् इतिमूलम्। अस्य सरला स्वं काव्यं तज्जन्या भावना तज्जन्यो रत्यादिविषयक आस्वाद एव काव्यव्यापारज आस्वाद इत्यभिधीयते इतिभावः। इतिसरला। नहि भट्ट स्वं काव्यव्यापार इति व्याख्येयम्। अन्यथा परम्परया जन्यत्वमास्वादे ग्रन्थकृदभि-प्रेतं कथं काव्यव्यापारि स्यात्। नहि काव्यजन्या भावना यदि सा काव्यजन्या स्यात्तदाऽगृहीतकाव्यार्थस्यापि सा स्यात्। नच तस्य सा भवति इति धियं परिमार्जय। किञ्चात्रैव ३२ पृष्ठे अनिर्वचनीयः साक्षिभास्यः शकुन्तलादिविषयकरत्यादिरेव रसः इतिरसानुभवे

( भट्ट नायंरसानुभवः केनप्रतारितोऽसि रसानुभवे ) अनिर्वचनीयता पूर्वमते स्वीक्रियते ( अये भट्ट नहिपूर्वमते रसानुभवे अनिर्वचनीयता स्वीक्रियते भ्रान्तोऽसि । पूर्वत्र तु रसे अनिर्वचनीयता तां विस्मृत्याऽवुद्ध्वा वा एवं प्रलपसि धिक्ते मेधाम् ।

किञ्चात्रैव ३२ पृष्ठे सरलायामास्वादनस्य रसविषयकत्वव्यवहारस्तु रत्यादिविषयकत्वालम्बन इति मूलं विवृण्वता भट्टेनेदं व्याख्यातम् । तथाहि भ्रमस्य ज्ञानरूपत्वात्तदास्वादः कथं घटेतेति शङ्कायाम्—शकुन्तलादिरतेरात्मनि भ्रमो भवति रतेरास्वादश्चानुभवसिद्धः ततश्च रतिविषयकास्वादव्यवहारमालम्ब्य रसस्याप्यास्वादो व्यवह्रियते इत्युत्तरमिति । अत्रेदं प्रष्टव्यम् यदि भ्रमस्य ज्ञानरूपत्वात्तदास्वादः कथं घटेतेत इत्यत्र आस्वादोऽनुभवोऽन्यद्वा किञ्चित् यदि अनुभवस्तदा तदनुभवस्य ज्ञानरूपत्वं प्रतिबन्धकं मनुषे तदा ज्ञानानुभवे विप्रतिपन्नस्य लोकोत्तरा ते स्थितिः नहि कश्चिज्ज्ञानानुभवे विप्रतिपन्नः । किञ्च रतेरास्वादश्चानुभसिद्ध इति तव ग्रन्थे आस्वादोऽनुभव एव तथा च ज्ञानस्यानुभवविषयता त्वयाप्यङ्गीकृतैव तर्हि ज्ञानरूपत्वात्तदास्वादः कथं घटेतेतिपूर्वापरविरुद्धलिखनं किंफलं जानासि । अलं पङ्कमन्थनेन निष्फलेनेति । न कुर्यान्निष्फलंकर्मेति स्मृतिप्रतिषिद्धमपीति विरम्यते । अस्य सर्वस्य रसप्रकरणस्य सरला विशेषत उपेक्ष्या । इदानीं मुद्रणसामग्रीदौर्लभ्यान्नाधिकं मीमांस्यते सति समये प्रतिपदं प्रतिस्थलं सरलायारसौष्ठवं विवरीतुं यतिष्ये । अस्य परिशिष्टोंऽशः पृथक् प्रकाश्य इति सुधियः प्रतीक्षन्तु तमिति शिवम् । इति गुरुमर्मप्रकाशकण्टकोद्धारे सरलासौष्ठवसंक्षेपः ।

यदत्र स्खलनं किञ्चिन्ममाज्ञाननिमित्तकम्
तच्छोधयन्तु सुधियः ज्ञाननिर्मलचेतसः

———

श्री गणेशाय नमः

# अथ रसगङ्गाधरमर्मप्रकाशमर्मोद्घाटनस्य असारतोद्घाटनम् ।

## नमस्तस्मैकस्मैचिदमितमहिम्ने पुरभिदे

श्रीमत्कौशिकवंशवारिधिविधुर्ज्जग्वादिसूरिः परं
नागेशस्य विकाश्य दूषणगणं स्वं बोधमाचिख्यपत्
तत्सर्वं शुचिदर्पणे मम कृतौ पश्यन्तु विज्ञाश्चिरम्
श्रीमत्कौशिकबोधकौशलमलं व्युत्पत्तिमर्थे पराम् ॥ १ ॥
यत्तु कश्चिद्रास्थानपण्डितो जग्गूवेङ्कटाचार्य्यः—
निर्भिद्य क्ष्मारुहाणामतिघनमुदरं येषु गोत्रां गतेषु
द्राघिष्ठस्वर्णदण्डभ्रमभृतमनसो हन्त धित्सन्ति पादान्
यैः संभिन्ने दलाग्रप्रचलहिमकणे दाडिमीवीजबुद्ध्या
चञ्चूचाञ्चल्यमञ्चन्ति च शुकशिशवस्तेंशवः पान्तुभानोः-
इति पद्यमुदाहृत्य अत्र भ्रान्तिभृतां तिरश्चामपि एव—
मानन्दं जनयतीति जगदानन्दहेतुर्भगवानिति व्यज्यते इति

तद्व्याख्यानमुदाजहार ततः अत्र मर्मप्रकाशाख्यटोकाकृन्नागेश-भट्टः "अन्यदस्योदाहरणमाह यथा वेति ते रविकिरणाः युष्मान् पान्तु के येषु तरूणामंतितिविडमन्तःप्रदेशं विदार्य्य भूमिं गतेषु अतिदीर्घ-स्वर्णदण्डसम्बन्धिभ्रमेण भृतं पोषितं मनो येषां ते जनाः । हन्ते त्याश्चर्य्यम् पादान् किरणान् धित्सन्ति धर्तुमिच्छन्ति । किञ्च यैः संभिन्ने मिश्रिते तरुपत्राग्रनिष्ठचञ्चलहिमकणे या दाडिमीवीज-बुद्धिः तया चञ्च्वा चाञ्चल्यं ग्रहणार्थव्यापारं अञ्चन्ति कुर्वन्तोत्यर्थः अत्र भ्रान्तिमानलङ्कारः तेन व्यङ्ग्यमाह अत्रेति अपिनाऽतिरश्चाम् इति व्याख्यत" इति नागेशग्रन्थमुदाहृत्य पराक्रमते इदम्—

अस्य व्याख्यातुरयं भावः सूर्योदयसमये निविडतरुदलविवर-विसृतांस्तरणिकिरणान् जनाः सुवर्णदण्डभ्रान्त्या ग्रहीतुमिच्छन्ति (इति ते कल्पितव्याख्या नायं नागेशग्रन्थः नागेशतात्पर्य्यन्तु सुवर्णदण्डभ्रान्ताः जना रविकिरणेषु गोत्रांगतेषु स्वप्रत्ययपरीक्षार्थंचरणान् धित्सन्ति धर्तुं निधातुमिच्छन्ति इति। लोके दृष्टमपि इदं रजतमिति शुक्तौ रजतविभ्रमे पादेन प्रथमं परीक्षते जनः पश्चात्प्रवर्तते निवर्तते वेति तत्त्वम्) यैः सूर्य्यकिरणैः मिश्रिते तरुपत्राग्रस्थितहिमजलविन्दौ शुकशिशूनां दाडिमीवीजबुद्धिः ते रविकिरणाः युष्मान् पान्तु इति कौशिकः। अये वुध नायं नागेशस्य भावः इयं तु त्वदीया दृष्टिः नागेशस्तु येषु तरूणामतिनिविडमन्तःप्रदेशं विदार्य्य भूमिं गतेषु इति व्याख्यत् भवाँस्तु तस्य तरुदलविवरविसृतानिति भावं व्याचष्टे अत्र किमुचितमिति सुधियः विमृशन्तु। किञ्च नागेशः चञ्चलहिमकणे इति व्याख्यत भवांस्तु हिमजलविन्दौ इति व्याचक्षाणो नागेशं निपिपातयिषुः पराक्रमति कियान् ते शास्त्रश्रमः स्लाघ्य इति विज्ञाः जानन्तु। किंच हिमजलहिमकणयोरापामरप्रसिद्धं वैलक्षण्यं चक्षुषी निमील्य विपरियन्नतीवश्रद्धेयवचनोऽसि का ते प्रज्ञाचिकित्सा। मूलोक्तं हिमकणं नागेशव्याख्यातमपि अश्रद्धया उपेक्षमाणो विकत्थसे अहो धाष्ट्र्यं कलिवाहनानाम्।

अत्रेदं विचार्य्यते—यत्तु अत्र पूर्वार्धगतस्य धित्सन्तीति क्रियापदस्य कर्तृपदत्वेन जना इति पदमध्याहृतम् तदनुचितम् उत्तरार्धक्रियाभूत अञ्चुधात्वर्थकर्तृभूतशुकशिशूनामेव धित्सन्तीत्यत्रापि कर्तृत्वसंभवेनानध्याहारेणैव संभवति निर्वाहेऽध्याहारपक्षस्य दुष्टत्वादिति कौशिकः। (अत्र क्रियाभूत अञ्चु धात्वर्थेति विसन्धिः प्रामादिकः अये वुध नहि जना इति अध्याहृतम् किन्तु वहुव्रीहिलभ्यमवैयाकरणत्वादध्याहृतमिति वदसि। किञ्चोत्तरार्धक्रियाभूतअञ्चुधात्वर्थे-

त्वादि तववचनमेवात्यनुचितम् । नह्युत्तरार्धस्य क्रियाभूतोऽञ्चु-धात्वर्थः क्रियातु कर्त्रादिकारकाणामेव भवति तैर्निरूप्यत्वात्तस्याः नहि उत्तरार्धेन क्रिया निरूप्यते तस्याकारकत्वात् । नहि एतावता वोधेन नागेशं विजेष्यसे । गौर्गौःकामदुघा सम्यगिति दण्डीपद्यं स्मृत्वा सन्तोष्टव्यम् । किञ्च धित्सन्तीत्यत्रापि कर्तृत्वसंभवेनेत्यपि तव मलिना पदपङ्क्तिः इतिपरनिर्देशे सर्वत्रैव प्रायःशब्दानां स्वरूपपर-तया धित्सन्तीत्यस्य क्रियार्थकत्वाभावात्कथं तस्य कर्तृत्वसंभावनेति विचार्य्यम् । एतेनाध्याहारपक्षस्य दुष्टत्वादित्यारभ्य परिभाषित-व्यो वेत्यन्तः ग्रन्थः शिष्यप्रतारणैवेति गृहाण । नह्यत्राध्याहारः जनानां वहुव्रीहिणैवोपस्थितत्वात् योग्यस्यैव समासेनोपस्थापयितुं शक्यत्वात् अयोग्याः शुकशिशवः, तेषां स्वर्णदण्डत्वभ्रान्तेरसम्भवादप्रसिद्धेश्चेति । कवेर्भ्रान्तिवोधेनैवानन्दजननव्यञ्जनस्येष्टत्वात् । नहि शुकशिशवः इदं रजतमेपसुवर्णदण्ड इति भ्रान्त्यै प्रभवन्तीति कणेहत्याङ्गीकरणी-यम् । नागेशाशयस्तु पण्डितैरपि दुर्ज्ञेयोऽतोनात्रापराध्यति भवान् । किञ्च मर्मोद्घाटनतृतीयपृष्ठे पूर्वार्धगतायाः धित्सन्तीति क्रियायाः कर्मवाचकं पदान् इति पदम् । अत्रापि धित्सन्तीति क्रियाया इति चिन्त्यमेव पूर्वोक्तविधया अस्य क्रियात्वाभावात् । अत्रैव प्रतीकत-योद्धृत्य किरणानिति व्याख्यानम् इतिव्याख्यातम् इति कौशिकः ( अत्रापि प्रतीकतयोद्धृत्येत्यपि चिन्त्यम् प्रतीकोऽवयवे पुंसीत्य-भिधानाद्व्याख्येयस्य कस्यापि प्रतीकत्वाभावात् । कौशिक यत्र प्रती-कतयोपादानं तत्रेतिपरनिर्देशोऽवश्यं भवतीति गृहाणानुगृहाण-नागेशमिति ।

अथात्रैव २ पृष्ठे यच्च पूर्वार्धगतायाः धित्सन्तीति क्रियायाः कर्म-वाचकंपादानिति पदं प्रतीकतयोद्धृत्य किरणान् इतिव्याख्यातम् तद-प्यनुचितम् यत्तच्छब्दयोः समानार्थकत्वेन सम्वन्धस्य सर्वसम्मतत्वेन (नहि यत्तच्छब्दयोस्सम्वन्धः कस्यापिविदुषः सम्मतः किन्तु तदर्थयोः

नच समानार्थकता सम्बन्धे हेतुरिति किंच पदार्थः पदार्थेनान्वेति नहि पदं पदेन, तस्मात्सर्वोत्रत्यः प्रबन्धः प्रलाप एव ) प्रकृते पूर्वार्धे येषु इति उत्तरार्धे यैरित यच्छद्वेन किरणान् परामृश्य (अत्र यच्छद्वाभ्या-मिति प्रयोज्यम् अग्रे यथा यच्छद्वयोरिति द्विचनान्तम् ) तयोर्यच्छ-द्वयोर्मध्ये यच्छद्वं विहाय पादशद्वेन किरणानां ग्रहणस्यात्यन्तमनु-चितत्वात् ( अत्र पादशद्वेन किरणानां न ग्रहणं किन्तु चरणाना-मेव किरणान् इतिपाठस्तु लेखकप्रमादात् चरणान् इति तत्र पाठः ) तथाहि यच्छद्वेनैव किरणानां ग्रहणे सत्येव तेंशव। इत्यत्र तच्छद्वेन सहान्वयः संभवति (कौशिक नहि अत्रान्वयः किन्तु तच्छद्वेन परा-मर्शः) प्रकृते तु पादशद्वेनैव किरणानां कथनात् तेषां च धित्सन्तीति क्रियायां ( इदमप्यसाधु इतिपरधित्सन्तिपदेन क्रियाया अनुपस्था-नात् ) कर्मत्वेन अन्वितत्वाद्वाक्यार्थो विश्राम्यति ( इदमप्यसम्यक् यावदाकाङ्क्षं वाक्यार्थस्याविश्रामात्। अतएव तवापि सम्मतात्रैक-वाक्यता सेत्स्यतीति, अर्थैकत्वे चैकं वाक्यं साकाङ्क्षं चेद्विभागे स्यादिति एकवाक्यतालक्षणात् किञ्चान्यशद्वेनोपस्थापितस्याप्यर्थस्य तच्छद्वेन परामर्शस्य घटोऽस्ति तमानयेत्यादौ दृष्टत्वात् यच्छद्वेनैव ग्रहणे तच्छद्वेन सहान्वयः संभवतीति त्वदुक्तिस्सुधियां खेदवहा नहि शद्वः शद्वेनान्वेति किन्तु पदार्थः पदार्थेनेति सर्वसम्मतत्वात्-एतया धिया नागेशं विजेतुं प्रस्थितोऽसि शोच्यस्ते उद्यमकः। किंच तेंशव इति तच्छद्वेन सहान्वयो न सम्भवतीत्यपि प्रलाप एव नहि तेंशव इति तच्छद्वोऽत्र अत्रत्यतच्छद्वेनेति प्रयोज्यम् ) नच येष्विति यच्छद्वस्य तेंशव इति तच्छद्वेन सहान्वये ( इदमप्यसाधु ) ( पूर्वो-क्तरीत्या ) नकाचिदनुपपत्तिरितिवाच्यम्। तेष्वित्यस्य स्वर्णदण्डभ्रमे विषयतयाऽन्वितत्वेन ( इदमपि चिन्त्यम् नहि येष्वित्यस्य सुवर्ण-दण्डभ्रमे विषयतयान्वयः किन्तु यदर्थस्य। नहि शद्वः शद्वेनान्वेति किन्तु पदार्थः पदार्थेनेति गृहाण' वालधीरसि चरमे वयस्यपि) प्रकृं-

स्यमानवाचित्वात् यच्छद्बस्य ( अत्र प्रक्रम्यमाणवाचित्वादिति प्रयोज्यम्, अवैयाकरणोऽसि नहि शद्बशक्तिं विजानासि, तथापि न प्रक्रान्त परामर्शिता यच्छद्बस्य किन्तु तच्छद्बस्य) स्वत एवोपस्थितत्वेन पादानित्यस्य विशेषणीभूतेन तानिति पदेन सह सम्बन्धात् ( इदमप्यसाधु पदार्थःपदार्थेनान्वेतीति नियमात्। निराकाङ्क्षत्वादित्यप्यसम्यक् तस्याऽसिद्धेः यावन्महावाक्यार्थनिष्पत्ति निराकाङ्क्षत्वस्यासिद्धत्वात् तथाच कथमन्वयस्यासम्भवइति भवानेव तावद्विचारयतु ! )

अत्र प्रकरणे तच्छद्बेन सहान्वयः संभवति २ पृ० १७ पं० तच्छद्बेन सहान्वयोन सम्भवति २ पृ० २० पं० तच्छद्बेन सहान्वये न कांचिदनुपपत्तिरिति २ पृ० २२ पं० येष्वित्यस्य सुवर्णदण्डभ्रमे विषयतयाऽन्वितत्वेन २ पृ० २३ प० प्रक्रंस्यमानवाचित्वत् ३ पृ० १ प० पादानित्यस्य विशेषणीभूतेन पादानितिपदेन सम्बन्धान्निराकाङ्क्षत्वात् ३ पृ० २ प० तेंशव इति तच्छद्बेन सहान्वयासंभवात् ३ पृ० ३ प० इत्यादिसर्वं प्रमादनिवद्धमिति कौशिकवचनमश्रद्धेयमेव। नहिसामान्यं विशेषस्य विशेषकमसमर्थत्वात्। ३ पृ० ४ प० तथाच येषु सुवर्णदण्डभ्रमः तान् किरणन् गृहीतुमिच्छन्ति जना इति वाक्यार्थे पूर्णे तेंशव इत्यनेन वाक्येन सह सम्बन्धो न गृहीतुं शक्यते ( अये कौशिक न हि तेंशव इतिवाक्यम् एकतिङ् वाक्यमिति वाक्यलक्षणात् किञ्चनहि वाक्येन सह सम्बन्धः किन्तु पदार्थेन, पदार्थः पदार्थेनान्वेतीति व्युत्पत्तेः। अत्रापि द्विः गृहीतुमिति प्रयुक्तम् व्याधिरयमसाधुप्रयोगस्य। क्वचिद्गृहीतुं क्वचिद्ग्रहीतुमिति प्रयुंक्ते नावधारयति प्रयोक्ता तथ्यम्। ) यदि च पूर्वार्धोत्तरार्धयो भिन्नावेव वाक्यार्थौ—येषु भ्रमःतान् किरणान् धित्सन्ति जनाः ( नहि बुधकौशिक तथा किन्तु येषु स्वर्णदण्ड भ्रमः तेषु गोत्रांगतेषु प्रत्ययपरीक्षार्थं पादान् चरणान् धित्सन्तीति व्याख्येयम् ) यैर्मिश्रिते हिमजलकणे ( नहि कौशिक अत्र हिमकणे इत्येव

वाच्यम् मूलानुरोधात् ) शुकशिशूनां दाडिमीवीजबुद्धिः तेंशवः पान्त्विति । तदा पूर्वार्धगतानां किरणानाम् उत्तरार्धगतमुख्य वाक्यार्थीभूतरक्षणकर्तृत्वान्वयायोगादुद्देश्यासिद्धिः ( अये कौशिक उत्तरार्धनिवद्धास्तेंशव इत्यनेन किरणाः यदि उत्तरार्धगता अपि पूर्वार्धनिवद्धैरन्वेतुं प्रभवन्ति यथा तव मते उत्तरार्धं निवद्धा अपि शुकशिशवो धित्सन्तीतिक्रियया एवमस्यापि उत्तरार्धनिवद्धेन सहान्वये वाधाभावादन्वयो भवयेव, तर्हि कथं प्रलपसि पूर्वार्धवर्णितानामुत्तरार्धगतरक्षणकर्तृत्वान्वयायोगादिति । नहीदृक् प्रमाद्यन् नागेशं विजेता । (हन्त "घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहोऽद्यदृष्टः ) संभवत्येकवाक्यत्वे वाक्यभेदस्तुनेष्यते इतिवाक्यभेदरूप दोषापत्तिश्च ( अयेबुध नायं वाक्यभेदः किंतु वाक्यमिदम् । किञ्च वाक्यभेदोऽपिन एकवाक्यताया अनुपदं समर्थयिष्यमाणत्वात् नहि प्रतिज्ञामात्रेण वस्तुसिद्धिरिति गृहाण )

यच्च धित्सन्तीति क्रियापदं प्रतीकतया गृहीत्वा धर्तुमिच्छन्तीति विवृतम् ( अये कौशिक कस्य प्रतीकतया गृहीत्वेति जानासि ) तत्तु सुतरां वैयाकरणविस्मयावहम्—तथाहि तौदादिकात् धृङ् अवस्थाने इति धातोः (अये कौशिक नहि धृङ् अवस्थाने इति धातुः किन्तु धृङ् इति, इदं तव वचनं वैयाकरणविस्मयकारि नवा, साधुरसि नागेशप्रतिमल्लः यस्य ते धातुस्वरूपज्ञानमपीदृक् ) सनि कृते दिधरिषन्ते इतिरूपम् । भौवादिकात्तु धृञ् धारणे धृङ् अवध्वंसने इति च धातोः (नहि कौशिक धृञ् धारणे धृङ् अवध्वंसने इतित्वयानिर्दिश्यमानं धातुः प्रकृतिस्थो भव) दिधीर्षन्ति दिधीर्षन्ते इति च रूपम् निष्पद्यते ( कौशिक निष्पद्येते इति प्रयोज्यम् विस्मयन्ते खिद्यन्ति च सुधियः ) धित्सन्तीति रूपन्तु जौहोत्यादिकात् डुधाञ्धारणपोषणयोरिति धाञ् धातोः ( अये कौशिक डुधाञ् धारणपोषणयोरिति धाञ् धातोरित्यत्र कथं पदार्थान्वयः ) सनि मीमेत्यादिसूत्रान्निष्पद्यते विग्रहस्तु धातुमिच्छन्तीति ( अये कौशिक पूर्वं धर्तुमिच्छन्तीति

विवृतम् इति त्वया निबद्धम्। इदानीं विग्रहस्तु धातुमिच्छन्तीति किमर्थं निर्दिश्यते। अस्तु अयं विग्रहः नागेशेन तु विवृतम् धित्सन्तीति पदं 'नतु विगृहीतम्, ततश्च किं विग्रहविवरणयोः समानार्थतां पश्यसि' यदि न तदा कथमुपद्रवसि नागेशग्रन्थम्। इदमेव त्वया साधनीयम् धित्सन्तीत्यस्य धर्तुमिच्छन्तीति कथं न विवरणम्। किञ्च पूर्वोदाहृतस्य ३ पृष्ठे यच्चेत्यारभ्य धातुमिच्छन्तीत्यन्तस्य प्रबन्धस्य नित्यसाकाङ्क्षस्य कुत्र पूर्वत्र परत्र वान्वय इति भवानेव तावद्विचारयतु। जीवत्कवेराशयस्य दुरवगमत्वात्) तथा च बृहन्मञ्जूषेत्यादि प्रामादिकमिव प्रतिभातीत्यन्तो भवदीयग्रन्थः सर्वथा उपेक्ष्यः द्वेषमूलश्च। अशक्तस्तत्पदं गन्तुं ततो निन्दति दुर्जन इतिलोकोक्तिसंवादी चेति गृहीत्वा उचितमनुष्ठेयम्।

किञ्च कौशिक बृहन्मञ्जूषादीनां मर्मोद्घाटनं चिकीर्षसि, न पादपोन्मूलनशक्ति रंहः शिलोच्चये मूर्छति मारुतस्येति स्मृत्वा सन्तोष्टव्यम्। धित्सन्तीत्यस्य धर्तु मिच्छन्तीतिविवरणमेव अतएव त्वया ऽपि विवृतमिति असकृदुपन्यस्तम् 'विवरणं नाम तत्समानार्थकपदान्तरेण तदर्थकथनम् यथा श्रोत्रियश्छन्दोऽधीते। नर्मदायां सरय्वां च भवौ दाविकसारवावित्यादि। अतोऽग्रे ४ पृष्ठे नच धित्सन्तीत्यारभ्य येनोक्तदोषः स्यादित्यन्ता तवोक्तिः तत्समन्वयश्च अर्थानुवादमात्रपरत्वेत्यारभ्य प्राणान्धारयतीत्यन्तः ग्रन्थः निरर्थक एव' विमतमर्मप्रकाशस्य विवरणरूपत्वात्। किञ्च गृहीतुमिच्छन्ति आदातुमीहन्ते इति द्वयमसाधु आद्यस्यानुशासनविरुद्धत्वात् द्वितीयस्येहेच्छयोरसामानार्थकत्वेन प्रमादमात्रत्वात्। नहि धित्सन्तीत्यस्यार्थानुवादतया कश्चित्प्रज्ञावान् आदातुमीहन्ते इति प्रयुंक्ते इतिचिन्त्यस्तेऽर्थानुवादः साधुप्रज्ञोऽसि। किञ्चात्रैव ३ पृष्ठे जिघृक्षन्ति आदित्सन्तीत्यादिरूपेण भाव्यमित्यपि असम्यगेव। तथाचैवंविधव्युत्पन्नस्य ते नागेशविजिगीषा दुराशैवेति अवधारय) किञ्च चतुर्थपृष्ठे धर्तु मिच्छन्तीति तु प्रकृतिप्रत्ययविभागप्रदर्शनपूर्वकमर्थ-

विवरणम् (अये कौशिक धित्सन्तीत्यस्य धर्तुमिच्छन्तीति कथं प्रकृतिप्रत्ययविभागपूर्वकमर्थविवरणम्। किं कौशिक धर्तुमिति प्रकृतिमिच्छन्तीति प्रत्ययं मनुषे नहि धित्सन्तीत्यस्य धर्तुमिति प्रकृतिरिच्छन्तीति प्रत्ययः सर्वथाऽवैयाकरणोसि किं त्वां वदामि। अये कौशिक इदृशी ते मलिना पङ्क्तिपरम्परा असकृदुदाहृता उदाहरिष्यते च तथा। किं ते नागेशाक्रमणं यशसे। किंच ४ पृ. तदापीत्यारभ्य निरोद्धुं शक्नुयादित्यन्ता समला ते पदपङ्क्तिपरम्परा त्वामसहृदयमुच्चैःक्रोशमाक्रोशतीति गृहाण। एतेन ४ पृ. नाप्येतल्लेखकमुद्रापकेत्यारभ्य ५ पृ. न्यूनतापत्तेरित्यन्तो ग्रन्थः सर्वथोपेक्ष्यः। सर्वस्यास्य तव प्रतिभाकल्पितत्वेन प्रलापप्रायत्वात्। अत्रेदमेकं वाक्यम् यथा येषु गोत्रां गतेषु स्वर्णदण्डभ्रमलुब्धमनसो जनाः पादान् चरणान् धित्सन्ति स्वप्रत्ययप्रामाण्यपरीक्षार्थं, यैः संभिन्ने दलाग्रप्रचलहिमकणे दाडिमीबीजबुद्ध्या शुकशिशवः चञ्चूचाञ्चलमञ्चन्ति ते भानोरंशवः पान्तु इति। अत्र विधित्सितवाक्यार्थस्तथाविधभान्वंशकर्तृकपालनमेव तस्य यावदाकाङ्क्षमपर्य्यवसानमेवेति गृहाण "स्वार्थबोधसमाप्तानामङ्गाङ्गित्वव्यपेक्षया। वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते" इति न्यायादिति सर्वं सुस्थम्। एतेन ५ पृ. तथासति जनाः किरणान् धातुमिच्छन्तीति वाक्यस्य स्वाभिमतग्रहणेच्छारूपार्थानवबोधकत्वान्न्यूनतापत्तेरित्यन्तोग्रन्थ उपेक्ष्यो नागेशानुक्तत्वात्। पादान् चरणानिति मर्मप्रकाशपाठः किरणानिति शोधकलेखकप्रमाद एव। एतेन ५ पृष्ठे यदपीत्यारभ्योपेक्षणीयमित्यन्तः कौशिकग्रन्थ एव उपेक्ष्यः कुकल्पनामात्रत्वादित्यलम्।

यदपि हन्तेत्यस्य आश्चर्यमिति व्याख्यानम् तदप्यस्वरसम् तथाहि उदयसमयतरुदलसरणिविसृततरणिकिरणकनकयष्टिभ्रमेण ग्रहणप्रवृत्तजनदर्शनात्खलुवक्तव्यमाश्चर्यं जनानाम् नियमेन वृक्षाधोगमनम् मध्यान्हे संभवति आतपबाधया नतु प्रभाते, अतो न तत्र जनप्रसक्तिः (साधु कौशिक साधूच्यते कल्पकोऽसि धन्या ते

कल्पना "नभः पतन्त्यात्मसमं पतत्रिण" इति पूर्वैरप्युक्तम्। पार्श्वद्वयारोपितवृक्षमार्गेण गच्छतां जनानां वृक्षाधोगमनं स्वतः प्राप्तमिति गृहाण, न क्लिष्टकल्पनावसरः) किञ्च बुद्धिपूर्वकप्रवृत्तिमतां जनानां वृक्षाधःप्रदेशे स्वर्णदण्डप्रसक्तिरसम्भावितैव ( नहि कौशिकासम्भाविनी तादृग्मार्गेण गच्छतां जनानां तथाविधान् रविकिरणान् प्रातःकाले मन्दालोके दृष्ट्वा अयं स्वर्णदण्डः केनचिद्भाग्यवता विस्मृत्य त्यक्त इति बुद्धिः सुलभैव। प्रवृत्तिं प्रति ज्ञानमात्रस्यैव हेतुत्वात् भ्रान्तस्यापि प्रवृत्तिदर्शनात् ) भ्रमोऽपि हि स्वोचितदेशकालादिकमपेक्षते नहि पेटिकानिक्षिप्तरसनादाम्नि मुग्धानामपि भ्रमः। तमस्यपि सर्पत्वभ्रमः किन्तु मन्दालोकवीथ्यादिनिपतितायामेव रज्जौ सर्पत्वभ्रमः अतः सुतरां न तद्ग्रहणेच्छा प्रसक्तिः तथा च नाश्चर्यप्रसङ्ग इति कौशिकोद्भावितादूभुतदूषणगणः ( अये कौशिक किं नात्र भ्रमोचितदेशकालादिकं पश्यसि येन भ्रमे विप्रतिपन्नोऽसि वनमार्गेणारुणोदये ऽर्धोदये वा सूर्य्यस्य गच्छतां जनानां गहनवनान्धकारेण मन्दालोकसचिवानां तिर्य्यगरुणतरणिकिरणान् धरणिगतान् दूरात्प्रेक्ष्य अहो भाग्याल्लब्धः स्वर्णदण्ड इति ज्ञानं हर्षश्च सर्वथासम्भवति एतावताऽपि यदिकश्चिद्भ्रमसाधने विप्रतिपद्येत तदा कस्तद्बाधने उपाय इति सन्तोष्टव्यमेव सुधीभिः "ज्ञानलवदुर्विदग्धं ब्रह्मापि तं नरंन रञ्जयतीति" शिष्टोक्तिमनुसन्धायेत्यलम्। तथाच स्वर्णदण्डत्वभ्रमस्य सूपपन्नत्वात्सुतरान्तज्जिघृक्षाप्रवृत्ती हर्षश्चेतिसर्वं सम्भवतीति आश्चर्यमेव हन्तेत्यस्यार्थः। निपुणमतीनामेव भ्रम आश्चर्यकारीति लोके दृष्टम् नानिपुणमतीनां भ्रमस्तथा। शुकशिशूनां तत्र स्वर्णदण्डत्वभ्रमस्तु शपथनिर्णेय एवेति। किञ्च तिरश्चामप्येवमानन्दं जनयतीति मूलदर्शनात् भ्रमस्यानन्दजनकत्वमवगम्यते नहि तिर्यञ्चः स्वर्णदण्डप्राप्त्या मोदन्ते तेषु वा पादान् निधाय मोदन्ते इति केनापि प्रमाणेन प्रसिद्धया वा अवगतम् मोदप्राप्तिलिङ्गस्यानवगमात्। ... स्फुटमव-

गमात् तदवगमः। अतिर्य्यक्षु तु आत्मदृष्टान्तेनैवानुमेय इति बोध्यम्। यदि जनानामानन्दहेतुत्वं न विवक्षितं चेत्तदा अपिपदस्य का गतिः जगत्पदस्य का दशा इति तावत् स्वयमेवावधारय। किञ्च एवंविधायाः भ्रान्तेर्लोकेऽपि संभवात्स्वतःसंभवित्वमिति ग्रन्थस्य कोपपत्तिरिति चिन्तय। लोकपदेनातिर्य्यग्लोको जगन्नाथस्याभिप्रेतः नहि तिर्य्यग्लोके तथाविधभ्रमसंभावना भ्रमस्य स्वतः संभवित्वे हेतुरिति ज्ञानचक्षुरुन्मील्य सश्रद्धं चिन्तय कदाचिच्चेतिष्यसि इति शिवम्।

किञ्च कौशिक नहि मुग्धानामपि भ्रम इति तवपदपङ्क्तेः कोर्थः मुग्धानां भ्रमवतां न भ्रमः इत्यर्थस्तदा बाधः स्वोक्तिविरोधो वा मुग्धानां सुन्दराणां न भ्रम इति तु प्रतिज्ञामात्रमकिञ्चित्करम्। किं मोहभ्रमपदार्थौ भिन्नावभिप्रैषि इत्यादि सर्वं तवनागेशनिद्राजनिताज्ञानपरिचायकमेवेत्यलम् जलताडनेन। ५ पृ० १५ पं०—

अपिच उदाहृतश्लोकस्यालङ्कारेण वस्तुध्वनित्वसमन्वयोपपादनपरे "अत्र भ्रान्तभूतां तिरश्चामप्येवमानन्दं जनयतीति जगदानन्दहेतुर्भगवानितिव्यज्यते इति मूलकृद्वाक्ये" तिरश्चामपीत्यत्र व्याख्यात्रा अपिना अतिरश्चामिति व्याख्यातम् तदपि न विमर्दसहमिति कौशिकस्तथाहि किमत्र वाच्यम् किं वा व्यङ्गमिति विचारे अलङ्कारेण वस्तुध्वनेरुदाहरणादलङ्कारस्यवाच्यत्वम् भगवतः सूर्य्यस्य जगदानन्दहेतुत्वस्य व्यङ्गत्वं च वक्तव्यम् तथैव चोक्तं व्याख्यात्रापि 'अत्र भ्रान्तिमानलङ्कारः तेन व्यङ्गमाह अत्रेति ग्रन्थेन अतश्चोक्तांशे न विवादः किन्तु अनुपदमेव अपिना अतिरश्चामिति यल्लिखितं ततु स्ववचनविरुद्धं कुत इतिचेत् अपिना अतिरश्चामपीति मूलकारवाक्यघटकीभूतेन अपिशब्देन अतिरश्चां तिर्य्यग्भिन्नानामेवमानन्दं जनयतीत्यनुषङ्गेण योजना कार्य्या। एवञ्चापेः समुच्चयार्थकत्वम् तथाच जगदानन्दहेतुत्वस्य व्यङ्गयत्वासिद्धिः। तिर्य्यगतिर्य्यग्घटितसमुदायो हि जगच्छब्दार्थः तत्र तिरश्चामानन्दहेतुत्वं श्लोकस्योत्तरार्धलभ्यो वाच्यार्थः अतिरश्चामानन्द-

हेतुत्वं तु पूर्वार्धलभ्यो वाच्यार्थः इत्थं च तिर्य्यगतिर्य्यग्घटित-समुदायरूपजगदानन्दहेतुत्वस्य वाच्यार्थत्वान्न व्यङ्ग्यत्वमिति कृत्वा तेन व्यङ्ग्यमाहेत्यादिपूर्वोक्तस्ववचनविरोधः स्फुट एव। न च भ्रम-भूतमनस इति दाडिमीवीजवुद्ध्या इतिच भ्रमस्य वाच्यत्वम् वाच्य-स्यैवालङ्कारत्वमितिभ्रान्तिमानलङ्कारः व्यङ्ग्यं तु तिरश्चामतिरश्चा-श्चानन्दहेतुत्वं तिर्य्यगतिर्य्यग्घटितसमुदायस्यैव जगद्रूपत्वात् तत्र तिर्य्यगानन्दहेतुत्वमुत्तरार्धलभ्यो व्यङ्ग्यार्थः अतिर्य्यगानन्दहेतुत्वं पूर्वार्धलभ्यो व्यङ्ग्यार्थः आनन्दस्योभयोरर्धयोश्शब्दैकवाच्यत्वाभावा-व्यङ्ग्यत्वमिति वाच्यम्। मूलकारवाक्ये "अत्र भ्रान्तिभूतां तिरश्चा-मप्येवमानन्दं जनयतीति जगदानन्दहेतुर्भगवानिति व्यज्यत इत्यत्र तिरश्चामप्येवमानन्दं जनयनीति वाक्यानन्तरमितिकरण वलात्तस्य च हेत्वर्थकत्वाज्जनयतीत्यन्तं वाच्यार्थः" जगदानन्दहेतुर्भगवानित्यय-मर्थो व्यङ्ग्य इति च स्वरसतः प्रतीतेः। तर्हि तिर्य्यगानन्दजनकत्वं कस्य शब्दस्य वाच्योर्थं इतिचेत् भ्रांतिवाचकयो स्स्वर्णदण्डभ्रमदाडिमीवी-जवुद्धिशब्दयोरेववाच्योर्थ इति गृहाण भ्रान्तेः कथमानन्दरूपत्वमि-तिचेत् वृत्त्यवच्छिन्नचैतन्यस्यैवानन्दरूपत्वात् भ्रान्तेरपि वृत्तिविशेष-त्वात्। नच भ्रान्त्या आनन्दो जन्यते नतुभ्रान्तिरेवानन्द इतिवा-च्यम् आनन्दस्य जडधर्मत्वाभावात् चैतन्यैकरूपत्वात्। चैतन्यस्य च नित्यत्वाज्जन्यत्वानुपपत्तेः अतएव रत्यवच्छिन्नचैतन्यमेवरस इत्यादि रसप्रकरणे द्रष्टव्यम् इतिकौशिकस्य मर्मोद्घाटनग्रथः। अत्र क्रमेण मम विचारः—

अये कौशिक अपेः समुच्चयार्थकत्वे कथं जगदानन्दहेतुत्वस्य व्यङ्ग्यत्वासिद्धिः नहि त्वत्प्रतिपादितश्लोकोत्तरार्धपूर्वार्धवाच्यत्वं जगदानन्दहेतुत्वस्य तथाच ६ पृ० ५ पं० इत्थं चेत्यारभ्य विरोधःस्फुट-एवेत्यन्तो निवन्धस्तण्डुलतुष इव निःसारः। किंच ततः परं नच भ्रमभूतमनस इत्यारभ्य व्यङ्ग्यत्वं इति वाच्यमित्यन्तोपिग्रन्थः तथैव। किञ्च कौशिक "व्यङ्ग्यमाहेति वाक्यम्" तथा ७ पृ० २०

प० "दानंअपिना"—७ पृ० १४ प० "अतिघनं अत्यन्तसान्द्रं" "वृक्षाणां उदरं" "पारं अञ्चन्ति" चेत्यादिकमवसने वा अचि वा अनुस्वारलिखनं तवातीवाज्ञानं प्रकाशयत् विदुषामरोचकं धत्ते। किञ्च कौशिक—एषु शब्देषु गंगाधर पंडित सांद्र हंत विद्वलंकारा-भिसंध्यानंदव्यंग्यदंडादिषु तव निवन्धे परः शतं निवद्धेषु परसवर्ण-वर्णहीनता तव बुद्धिकृता दर्पोक्ति भाजं त्वां धिक्कुर्वन्ती पण्डित-पदादधः पातयतीति अवधेहि। अहोधाष्ट्र्यंविजयते। प्रकृतमनुस-रामः—किंच कौशिक—मूलकारवाक्ये अत्र भ्रान्तिभृतां तिरश्चा-मप्येवमानन्दं जनयतीति जगदानन्दहेतुर्भगवानिति व्यज्यते इत्यत्र तिरश्चामप्येवमानन्दं जनयतीतिवाक्यानन्तरमितिकरणवलात्तस्य च हेत्वर्थकत्वात् जनयतीत्यन्तं वाच्यार्थः। साधु कौशिक साधूच्यते इतिकरणवलात् जनयतीत्यन्तं वाच्यार्थः। कौशिक कस्य पदस्य वाक्यस्य वा जनयतीत्यन्तं वाच्यार्थः। एतादृशस्य विशिष्टार्थस्योप-स्थापकं पदं वाक्यं वा वाचकमत्र नोपलभ्यते श्रीमतां कौशिकानां तु अन्धकारेऽप्यप्रतिहतचक्षुषां तस्योपलब्धिः संभविनीति मन्ये। अये कौशिक नहि प्रतिज्ञामात्रेण वस्तुसिद्धिः सा तु हेतुमपेक्षते वक्तव्यो हेतुः। यदि तवोत्तरग्रन्थाद्भ्रमशब्द एव तदुपस्थापक इति अभिप्रा-यस्तदा शोच्योऽसि। भ्रमादिशब्दस्य वृत्तिविशेषशक्तावपि आनन्दा-शक्तेः भ्रान्तिर्मिथ्यामतिर्भ्रम इत्यनुशासनात्। यत्तु—कौशिकवचनं भ्रान्तेः कथमानंदरूपत्वमिति चेत् वृत्यवच्छिन्नचैतन्यस्यैवानन्द-रूपत्वात् भ्रान्तेरपि वृत्तिविशेषत्वात् इति, तदपि न भ्रान्तेरानन्द-रूपतासमर्थकम्। अये कौशिक वृत्त्यवच्छिन्नचैतन्यस्यानन्दरूपत्वे-ऽपि वृत्तेरनानन्दत्वात्। नहिवृत्यानन्दयोरैक्यं येन तवेष्टं सिद्धयेत् त्वदुदाहृतरसगङ्गाधरेणापि वृत्त्यवच्छिन्नचैतन्यस्य रसरूपता सिद्धयति नतु वृत्तेस्तथाच भ्रमादिपदेन कथमानन्दस्योपस्थितिः कथञ्च जगदानन्दहेतुत्वरूपस्य विशिष्टार्थस्य वाच्यतासिद्धिरिति। अस्थाने भ्रान्तोऽसि भ्रान्तोऽसि। यदि भवान् यावज्जीवन-

कालेनापि भ्रमवृत्तेरानन्दरूपतां समर्थयेत्तदा तव वैदुष्यमुरीकर्त्तुं प्रतिजाने। साधु वेदान्ते अधीती विचक्षणश्चासि। स्थालीपुलाकन्यायेन परिचितं ते वेदान्तवैदुष्यं बहूपाधिरपि भवान् कलिकातानगरात् सांख्यतीर्थोपाधिमेव लब्धवान् धन्योसि तवोपाधिपटलेनैव प्रभाविताः जनास्त्वां लोकोत्तरपण्डितं मन्यन्ते निरर्थिकैव नागेशाक्रमणपरम्परा "इष्टस्यार्थस्य संसिद्धौ कोविद्वानिति" सदुक्तिविरोधात्। किंच कौशिक तुष्यतु सज्जनन्यायेन भ्रातेरानन्दरूपतायामपि इतिकरणबलादत्र भ्रान्तिभूतां तिरश्चामपि आनन्दं जनयतीत्यनेन बोध्योऽर्थः कस्य वाच्यः भ्रमादिशब्दस्तु आनन्दमात्रमुपस्थापयति तवमते ! 'शिष्टोर्थः कस्य' प्रतिपादयितुं प्रभवसि सुधियाम्पुरः नहि मन्दशिष्यप्रतारणामात्रं वैदुष्यम् किन्तु सुधियांपुरः तत्त्वविवेचनमिति श्रद्धत्स्व।

तथा एवमेवानुभव इत्यारभ्य स्ववचनविरोधः स्फुटएवेत्यन्तः ग्रन्थः सर्वथापेक्ष्योऽनुभवस्य शक्यार्थव्यवस्थापकत्वात् 'तदर्थाशक्तपदेन तदर्थबोधे भ्रान्तेन तत्पदस्य तदर्थशक्तेरसिद्धेरिति' गृहाण।

किंच कौशिक शुकानां जनानां च यावद्दाडमीबीजबुद्धिः यावच्च स्वर्णदण्डभ्रमस्तावदेव सुखं तदेवविवक्षितं च, आसंसारमेकस्य कस्यापि वस्तुनो नैकान्तसुखजनकत्वं तेन कि तस्य सुखहेतुत्वमपैति। किं प्रतिकूलमाचरति पुत्रे नश्यति धने दुःखजनकेऽपि सुखहेतुत्वमपैति, सर्वैरपि तयोः सुखहेतुत्वस्य स्वीकारात् तथैवात्रापि यावद्भ्रमकालमानन्दजननाज्जगदानन्दहेतुर्भवतीति व्यपदेशे व्यङ्ग्ये वा न काप्यनुपपत्तिरिति गृहाण। तेन दुःखमेव नतु सुखलेशोऽपीति निबन्धः सर्वथार्थशून्य इत्यपि गृहाण। किंच ७ पृ० १४ पं० तथा चेत्यारभ्य स्ववचनविरोधः स्फुट एवेत्यन्तस्तव निबन्धोऽपि अश्रद्धेय एव। नहि आनन्दहेतुत्वं भ्रमजनकत्वं कैरप्यनङ्गीकारात्। भ्रमशब्दस्य भ्रमवाचकत्वेऽपि आनन्दाशक्तत्वात्। तदमाकमप्रामाणिकत्वात् विमलवचनस्यांज्ञान-

मूलकत्वेनाश्रद्धेयत्वात्। ७ पृ० १७ सप्तमपङ्क्तौ—सर्वस्येत्यारभ्य इत्येतत्सर्वमित्यन्तो ग्रन्थः सर्वथोपेक्ष्यः पूर्वयुक्तिनिवन्धनैः। ततश्चात्र-इदं पठनीयम् अस्याः दोषपरम्परायास्समालोचकाज्ञानपरम्परैव-मूलमिति। किञ्च कौशिक अत्र यद्यपीत्यादिना यदुक्तं तदपि अश्रद्धेयमेव, द्राघिष्टेत्यादिपदस्यैव कर्तृपस्थापकत्वात् तथाच तव तथापीत्यारभ्य साहसं कृतमित्यन्तो ग्रन्थः पूतिकूष्माण्डमिव दूरानिरसनीयः। नहि जना इत्यध्याहृतं किन्तु बहुव्रीहिलभ्यमेव व्याख्यातमिति श्रद्धत्स्व पूर्वोक्ताभिर्युक्तिभिः। वस्तुतस्तु शुकशिशव-इति कर्तृपदस्य पूर्वार्धानिवेशः कवितायामीषदस्वारस्यं कविताऽ-परिपक्वधियां कौशिककल्पानां हृदयमारोहेदपि" न सहृदय-हृदयमारोहेदिति वयं पश्यामः। अथेदानीं मूलकारतात्पर्यानुरो-धिनी तदनुगुणपदरचनारूपा च कौशिकव्याख्या बुधैर्विलोक्या। तथाहि—इदञ्च पद्यं पण्डितराजविरचितासु पञ्चसु लहरीषु सुधा-लहर्यां सन्दर्धं। सुधालहरीविषयस्तु स्तुत्यतया सूर्य्य इति कौशिकः। अत्रेदं विचार्य्यम्। (जगन्नाथनामतसुधालहर्यां निवद्धमिदं पद्यमित्येतावदेवालम् अधिकस्य अजागलस्तनायमानत्वात्। किंच पञ्चसु लहरीषु लहर्य्यामिति अरूपिषु असम्बद्धत्वात् तथाहि पञ्चषु लहरीषु इति निर्धारणसप्तम्यभिप्रेता। अन्यस्याः अस-म्भवात् आत्माश्रयादिदोषकवलितत्वात्। तथाच जातिगुणादिभि-रेकदेशस्य समुदायात्पृथक्करणमेव निर्धारणम् अत्रजात्यादिभि-रेकदेशस्यापृथक्कृतेरिति। ) अत्रैव तत्किरणवर्णनपरं चेदमिति कौशिकः। यदि तत्किरणवर्णनपरमेवेदं पद्यम् तदाऽत्र भ्रान्ति-भृतां तिरश्चामप्येवमानन्दं जनयतीति जगदानन्दहेतुर्भगवानिति व्यज्यत इतिरसगङ्गाधरग्रन्थस्य कागतिस्सर्वथा कौशिक एवासि किं तव सूक्तिमीमांसनेनेत्यलम्। अत्रायमन्वयमुखः श्लोकार्थः (कौशिक अत्रान्वयमुखइति विशेषणं व्यर्थम् श्लोकार्थस्यान्वय-रूपत्वात् तदेवाभियुक्तैः पदार्थां इति कथ्यते। पदार्थानां पदैरेवा-

पस्थितत्वात्तेषां सम्बन्धस्यैव श्लोकप्रतिपाद्यत्वादिति अन्वयविदो जानन्त्येव ) अतिघनं अत्यन्तसान्द्रं ( अत्रापि अनुस्वारः अज्ञानमूलः ग्रन्थकृतः । वृक्षाणां उदरं ( अत्राप्यचि अनुस्वारस्तथैव । निर्भिद्य भित्वाइति व्याख्यानं हास्यकरम् पण्डितानाम् । सूर्य्यकिरणेषु ( विषये ) इतिसप्तम्यन्तयोः सामानाधिकरण्यं वैयधिकरण्यं वा सामानाधिकरण्ये कथमसमानवचनता । यदि सूर्य्यकिरणेषु इत्यत्रत्यसप्तम्याः विषयत्वमर्थस्तदा विषये इतिसप्तम्याः कोऽर्थः कुत्र च तत्सम्बन्धः । स्वर्णदंडेत्यत्र कथं न नित्यः परसवर्णः । दीर्घतरसुवर्णयष्टिभ्रान्तिपोषितमनसः ( अये कौशिक भ्रान्त्या कथं मनसः पोषणम् किञ्च तत्पोषणं जानासि । शुकशिशवः कीरपोताः ( अये कौशिक किं कीरपोता इतिव्याख्यानमपेक्षितं जिज्ञासूनां, किंवा जलताडनमेव करोषि । चञ्चूचाञ्चल्यं त्रोटिव्यापारं अञ्चन्ति च पूजयन्ति च बहुमन्यन्ते इत्यर्थः वाञ्छन्तीतियावत् अञ्चुगतिपूजनयोरिति हि धातुरितिकौशिकः ( अत्र किञ्चिद्वक्तव्यमापतितम् तदित्थम्—अये कौशिक शुकशिशवः किं त्रोटिव्यापारं पूजयन्ति कथं पूजयन्ति इति भवान् जानाति । किं कौशिक त्रोटिव्यापारं वाञ्छन्ति नतु कुर्वन्ति इति त्वदभिमतम् । कथं तेषां सा वाञ्छा त्वयाऽवधृता । किं कौशिक इयमेव मूलकारतात्पर्य्यानुरोधिनी व्याख्या , अहो ते व्याख्यानकौशलम् । अये सुधियः धातोः क्रियासामान्यमप्यर्थः तथाच अञ्चन्तीत्यस्य कुर्वन्तीत्यर्थः अतएव प्राञ्चो वैयाकरणाः फलव्यापारयोर्धातुराश्रये तु तिङः स्मृता इत्याहुः । अतएव नागेशेन अञ्चन्ति कुर्वन्तीत्यर्थ इति व्याख्यातम् । किंच मर्मोद्घाटनस्य ९ पृष्ठे अयमभिसन्धिरित्यारभ्य यदभिसन्धिवर्णनं तदपि विलोकनीयम् । तथाहि तथा तादृशसमये तरुपत्राग्रस्थिततुहिनबिन्दोरेकतस्त्वरुणारुणकिरणच्छुरणादन्यतःस्वाभाविकाभास्वरशुक्लरूपवत्त्वाच्च दाडिमीफलबीजभ्रान्त्या शुकशिशवस्तत्र चञ्चू व्यापारयितुं

वाञ्छन्तीति कौशिकः। अत्रेदं विचार्य्यम्—दाडिमीफलवीजभ्रान्तौ एकतोरक्तत्वमपरत्राभाश्वरशुक्लरूपवत्वं नियामकमित्यत्र किं निमित्तम् तद्वीजस्योभयरूपवत्तोतान्यत् यदि चाद्यस्तदा तत्र किं मूलम्। मूलेतु—यैः संभिन्ने दलाग्रप्रचलहिमकणे इत्येवोपनिवद्धम् यदि कौशिकव्याख्यानुसारेण उभयरुपवत्त्वं प्रयोजकं भवेत्तदा तदपि उपनिवद्ध्येत नोपनिवद्धम्। प्रत्यक्षविरुद्धञ्च दाडिमीवीजस्य शुक्लरक्तरूपवत्वाभावादिति कौशिकाज्ञानविलसितमेव मूलतात्पर्य्यानुरोधि व्याख्यानम्। किञ्च मर्मोद्धाटनस्य नवमपृष्ठे—अथोदाहृतश्लोके अलङ्कारेण वस्तुध्वनिमुपपादयति अथेत्यादिना॥ अत्रभ्रान्तिमानलङ्कारः सच वाच्यएवेत्यत्र न चर्चा उक्तव्याख्यानुसारेण पूर्वोत्तराधाभ्यामपि तिरश्चामेव शुकशिशूनां भ्रान्तिजननादितिकौशिकः। अत्रेदं विमृश्यम्—पद्यपूर्वोत्तरार्धाभ्यां शुकशिशूनां कथंभ्रान्तिजननम्। किं कौशिक शुकशिशवः पद्यपूर्वोत्तरार्धे पठित्वा श्रुत्वा वा भ्रान्ताः, किंवा भवानेव तथा भ्राम्यति। शुकशिशूनां तच्छ्रवणं तत्पठनं वा असंभावितमेवेति भवानेव भ्राम्यति। किंच पूर्वोत्तरार्धयोरेव भ्रान्तिजनने हेतुता विवक्षिता चेत्तदा कविना यैः सभिन्ने दलाग्रप्रचलहिमकणे इति किमर्थमुपनिवद्धम्। न ज्ञायते त्वं रसगङ्गाधरं प्रहरसि व्याख्यासि वेति कौशिक एवासिनूनम्। अथ कौशिकः—उक्तयुक्त्या भ्रान्तेरेवानन्दरूपत्वात् तिर्य्यगानन्दजनकत्वं वाच्यार्थेति। (अये कौशिक न वाच्यार्थस्तद्वाच्यार्थतायाः सुरगुरुणापि दिव्यवर्षसहस्रेणाप्युपपादयितुमशक्यत्वात्। किञ्च मूलपद्येऽपि भ्रान्तिरानन्दरूपा तव व्याख्यानमात्रैकप्रतिपाद्या नतु तदानन्दरूपताप्रतिपादकः कश्चिच्छब्दोऽस्ति। यदि दाडिमी वीजवुद्धिशब्दस्यैव तद्वाचकत्वमभिप्रैषि चेत्तादातवाऽज्ञानस्य का चिकित्सा, सर्वथा लोकोत्तर एवासीत्युपेक्ष्यसे। किञ्च तिरश्चामपीत्यत्र अपिविरोधे बुद्धिपूर्वकप्रवृत्तिशून्यत्वात्तिरश्चामानन्दजननाप्रसङ्गेऽपि विषयवैलक्षण्यमनुभवानन्दजनने बुद्धिपूर्वकप्रवृ-

त्तिमतां जनानामानन्दजननं दण्डापूपिकान्यायसिद्धमितिजगदानन्द-हेतुत्वं व्यङ्ग्यमेवेति भाव इति कौशिकः। अत्रेदं विचार्य्यम्—यदि तिरश्चां बुद्धिपूर्वकप्रवृत्त्यभावस्तदा शुकशिशूनां प्रवृत्तौ दाडिमीवीजबुद्ध्यादिकं कथं प्रवृत्तिहेतुत्वेनोपन्यस्तम्। यदिबुद्धिशब्देन प्रमामभिप्रैषिचेत्तदा स्वयं भ्रान्तोऽसि। रजतार्थिप्रवृत्तौ रजतभ्रमस्यापि न्यायादिदर्शनेषु वहुश उपनिवद्धत्वात्। किञ्च कौशिक विषयवैलक्षण्यस्यानन्दजनने प्रयाजकता उत तज्ज्ञानस्य यदि आद्यस्तदा तत्र प्रमाणाभावः यदिचान्त्यस्तदा कथं तव ग्रन्थसङ्गतिः। किंच यदि तिरश्चां बुद्धिपूर्वकप्रवृत्तिशून्यत्वादानन्दजननाप्रसङ्गस्तदा कथमत्र दण्डापूपिकान्यायस्यावसरः तदवसरस्तु तदा भवेद्यदा भगव न्बुद्धिपूर्वकप्रवृत्तिशून्यानां त्तिरश्चामपि यदिआनन्दहेतुस्तदा बुद्धिपूर्वकप्रवृत्तिमतां मनुष्याणामानन्दहेतुरित्यत्र किमुवक्तव्यमिति दण्डापूपिकान्यायस्य स्वरूपम् भवेत्। यदि कौशिकमते तिरश्चामानन्दजननाप्रसङ्गस्तदा कौशिकदण्डेनैव हतो दण्डापूपिकान्यायः। हा अविद्ये प्रभवसि जगद्विजेतुम्। कौशिक अनयैव योग्यतया नागेशं विजेतुं प्रस्थितोऽसि धिक्ते मौढ्यं धाष्टर्यञ्चेत्यलम्।

किञ्च मर्मोद्घाटनस्य ९ नवमे पृष्ठे अस्यान्त्विरत्यारभ्य विशेषतोऽर्थस्वारस्यचेत्यन्तो निवन्धो विशेषतः शिशुरोदनमेवेति उपेक्ष्यते।

किञ्च १० पृष्ठे नन्वित्यरभ्य शुकशिशूनां सुवर्णदण्डभ्रमदाडिमीवीजभ्रमयोः संभवादित्यन्तोऽपि निवन्धो विमर्दासहएव। तथाहि बुद्धिपूर्वकप्रवृत्तिशून्यत्वाच्छुकशिशूनां स्वर्णदण्डज्ञानं कथं संभवेदितिचेन्न मनुष्यस्येव तिरश्चामपि आहारनिद्राभयमैथुनादि विषयेषु बुद्धिपूर्वकप्रवृत्तिमत्वदर्शनात् इतिग्रन्थस्य ९ पृष्ठनिर्दिष्टबुद्धिपूर्वकप्रवृत्तिशून्यत्वात्तिरश्चामिति स्ववाक्यविरुद्धत्वात्प्रलापकल्पत्वात् किञ्च हेयोपादेयज्ञानस्य प्रवृत्तिसामान्यं प्रति प्रयोजकत्वात् तिरश्चां तदभावे दाडिमोवीजे प्रवृत्तिर्निम्वफलान्निवृत्तिश्च कथं स्यातामित्यलं कौशिकवचनानुसरणेनेति॥

अतः परं कौशिकेन मर्मोद्धाटनस्यैकादशतमपृष्ठादारभ्य समाप्तिपर्य्यन्तं शरदिन्दुरिवाह्लादजनकइत्यादि तथा सर्रासस्रवदाभाति इत्यादि तथा पुरःपुरस्तादरिभूपतीनामित्यादि च पद्यान्युदाहृत्य स्वव्युत्पत्तिनैपुण्यं ख्यापयता मर्मोद्धाटने यत्पराक्रान्तं तत्सर्वं गुरुमर्मप्रकाशकण्टकोद्धारे विस्तरत उत्सारितमिति तत एव द्रष्टव्यमित्यलम् । किञ्च

"गौर्गौः कामदुघा सम्यक् सुप्रयुक्ता स्मृता बुधैः
दुष्प्रयुक्ता पुनर्गोत्वं वक्तुरेव हि शंसतीति" पद्यं सदास्मर्तव्यम् ॥

सम्यग्विभाव्य मयका समुदीरितानां श्रीभट्टवेङ्कटकृताविह दूषणानाम् । निर्मत्सरो यदि समुद्धरणं विदध्यादस्याहमुज्ज्वलमतेर्मतिमानमामीति शिवम् ॥

मीमांसागहने प्रचारचतुरः श्रीब्रह्मविद्यागुरुः
काणादे परिनिष्ठितोऽमलमतिः प्रष्ठोऽक्षपादीयके ॥
नित्यं नृत्यति नर्तकीव कविता यस्यास्यरङ्गे व्यधात्
सोऽयं श्रीहरिनाथपण्डितमणिर्भव्यं प्रबन्धं नवम्

सुभद्रा जननी यस्य काशीनाथो महागुरुः
विश्वेशभक्तिर्भगिनी स जयत्यलमुच्चकैः ॥

गुरुमर्मणि शल्यस्योद्धारो यो विहितो मया ।
अनेन प्रीयतां देवः कृष्णश्चाणूरमर्दनः ॥

इति श्रीपदवाक्यप्रमाणपरिनिष्ठितश्रीपण्डितहरिनाथशर्मकृतौ गुरुमर्मप्रकाशमर्मोद्धाटनस्यासारतोद्धाटनम् ।

---

## कण्टकोद्धार परिशिष्टम्

अस्यां भूमिकायां साहित्यवल्लभीवल्लभेन मञ्जुकविना घनाक्षरीयं पठिता—

शब्दशास्त्रशेवधिरिवड्डिक्किकामवोद्य मनाङ् नव्यतर्कफक्किकासु झम्पाः प्रतिदीयन्ते। बाह्यज्ञानसंपादकसामयिकचर्चा नास्ति व्युत्पादककाव्यकथाः कर्णे नोपनीयन्ते। अश्रुतान्यवाक्यघोरनिर्घोषाः क्रियन्तेतमाम् मञ्जुनाथ सत्यं वच्मि चेन्मे क्षमादीयन्ते। विषमविवादोदर्कग्रस्तास्तर्कमात्रपराः केवलमलर्कसमाः साम्प्रतं प्रतीयन्ते। इति

अत्र मञ्जुनाथेति सम्बुद्ध्यन्तो निर्विभक्त्यन्तो वा प्रयोगः असाधुः। खिडिक्किकाशब्दः प्राकृतः प्रयुक्तः कवयितुर्निर्माणाक्षमतामुद्योतयति। अलर्कसमाः इति प्रयोगोऽपि प्रयोक्तुर्दुश्शीलत्वादिव्यञ्जयन् विदुषां वैमुख्यमापादयति इति एवं पठनीयम्—

सम्प्रति सुमूढाः पण्डितत्व म भनेतुं सदोमञ्चमभिगम्य धृतकाचनयना वरम्।
वेषभूषाभङ्गीरभिनविका विभावयन्तश्चालयन्तो बाहून्नयनानि मुहुरत्वरम्॥
विदुषां समाजं दूषयन्तो गालीमालासारैः मूढैः करतालैर्लुप्तगतिर्मतिकाः परम्।
नगरनिकुञ्जे जनपुञ्जेषु भषन्तो हन्त घ्नन्तः श्रुतिरन्ध्राणि विलोक्यन्ते कलावरम्॥

किञ्च साहित्यवलभीमारूढस्य मञ्जुकवेः मञ्जुरचनापि विलोकनीयैव यथा—(साहित्यवैभवे विहारिणोऽनुवादः)

दृशमुपैतिकनकं न वपुराप्य कनकसमकान्ति॥
भूषणानि करकर्कशस्पर्शतया प्रतिभान्ति॥

अत्र असमासे ल्यप् प्रयोगः आङ्योगे अर्थासङ्गतिः। वपुराप्यकनकं दृशं न उपैति अत्र दृग् ज्ञानं ज्ञातरि त्रिष्वित्यभिधानाज्ज्ञानार्थकत्वे यदि ज्ञानविषयता न तदा कथं करकर्कशस्पर्शतया भान्ति। ज्ञातरि तु तदसंभव एव। अपूर्वेयं रचना सुकविंमन्यस्येति।

अत्र मामकीनं पद्यं—हरवामावरकनकवपुषि कनकं न विभाति यदस्याः
स्पृष्ट्वा माधव करकठिनं कनकं प्रतियन्ति वयस्याः॥

इयं चापरा रचना मञ्जुकवेः—क्षणं चलेत्तिष्ठेत्क्षणं बाहौ प्रियमासाद्य
हर्म्यतटात्पश्यति घटां वनिता तडिच्छटाद्य॥

अत्रत्यापि रचना पूर्ववदेव। "बाहौप्रियमासाद्य" इदं वाक्यं "भुजप्रीतमगरडारि" इत्यस्यानुवादरूपम् अहोकियत्साम्यं विवरण-

विम्रियमाणयोः । किञ्च क्षणं तिष्ठेत्क्षणं चलेत् हर्म्यतटात्पश्यति घटामिति वाक्यानां कियान् विप्रकर्षः त्रीणि वाक्यानि जातानि" इदं सर्वं विहारीपद्यस्य हठादुपमर्दनम्। मृगयुजालपतिता कुररीव क्रोशति विहारिकविता । इदं साहित्यवैभवं भट्टस्य । किञ्च करिणां घटना-घटेत्यभिधानकोशं विस्मृत्योपेक्ष्य वा विहारिणा प्रतारितो भट्टः मेघे-घटाशब्दं प्रायुंक्त अहो रचनापाटवमस्य ।

अत्र मदीयमिदम् पद्यं पठनीयं—

श्यामगरे विनिधाय भुजं गच्छति तिष्ठति लवमभिका ।
आरूढा वलभीमनुपश्यति · पलेयं घनमभिका ॥

किञ्च साहित्यवलभीवल्लभस्यापरापि रचना दर्शनीया यथा—

राजति नीलपटान्तरित मेतन्मुखमवधेहि ।
ध्रुवं कलानिधिरुल्लसति कालिन्दी सलिलेहि ॥

अत्रापि वाक्यत्रयं वाक्यद्वयं वा जातं । अत्र मामकं पद्यमिदम्—

नीलपटान्तरित मुखविधुमवलोक्य समानि जगन्ति
कालिन्दीसलिले प्रतिबिम्बितमिन्दुममुं प्रवदन्ति ।

अग्रे च मदीयरचनया सह भट्टरचनावलोकनीया—

ख मरुण मालीना निशा चटकालीध्वनिरेति ।
रतिपाली परयासमं वनमाली न समेति ॥ भट्टस्य
रज्यति गगनमरुणकिरणै रजनी सजनी चलितैव
रमयति हरिरपरां दुर्ललितां भाग्यदशाकुलितैव । इदं मम ।
टटकी धोई धोवती चटकीली मुखजोति
लसति रसोई के वगर जगर मगर दुतिहोति । इति विहारिपद्यम्

अस्यानुवादरूपम् पद्यम् भट्टस्य—

रुचिरा मुखरुचिरालसति विशदा शाटीभाति
महाकान्तिराभावहा महानसे प्रतिभाति । इति भट्टः

अनुवादरूपे भट्टपद्ये प्राकृतपद्यस्य छायालवमपि नास्ति अत्रापि वाक्यत्रयम् । न कस्यापि केनापि सम्बन्धः जगद्रववाक्यवत् । अत्र महानसस्य कान्तिरन्यस्या वा कान्तिरितिसन्देह एव । द्वयमप्य-

सुन्दरञ्च अहो मञ्जुरचना मञ्जुकवेः ।

अत्र मदीयानि पद्यानि विलोक्यानि यथा—

असहा तापभरस्य वरा धावति वदनं भृशमच्छम् ।
प्रसरन्ती मुखकान्तिरमुष्याः द्योतयते गृहमच्छम् ॥

विशदाभं परिधायाम्बरमधुना जितविधुवदना सा ।
भासयते भवनं द्युतिमद्द्रुतमेहि ललितसदना सा ॥

तापततेरसहा बाला धावति वदनं भृशमच्छम् ।
उद्गच्छद्द्युतिघनमदसीयम् भासयते गृहमच्छम् ॥

अतिसालीनायाः सदा पिहितवदनाया मुखविधुदर्शनं कामयमानस्य कृष्णस्य प्रियसहचरीवाक्यानि-अयमेवावसरस्तन्मुखेन्दुदर्शनलाभस्येति द्रुतमेहि ।

गता न शिशुता द्युतिरितो यौवनमङ्गमुपैति
द्विविधरङ्ग कौशेयमिव तनुराभ्यां रुचिमेति । इयं भट्टरचना
लसति तनौ शैशवलवमङ्केऽङ्कुरिता यौवनशोभा
चित्रपटी शोभामनुकुरुते तत्सङ्गततनुशोभा । इति मदीया ।

एषां पद्यानां समीचीनत्वमीमांसा भविता प्रकाशनसामग्रीदौर्लभ्यात् नायमवसरः । किन्तु भट्टरचनां तद्विषये भट्टगर्वोक्तिं स्मरतश्च मे इदं जगन्नाथपद्यं हृदयपथमवतरति यथा—

निर्माणे यदि मार्मिकोऽसि नितरामत्यन्तपाकद्रवन्मृद्वीका-मधुमाधुरी-मदपरीहारोद्धुराणां गिराम् ।
काव्यं तर्हि सखे सुखेन कथय त्वं समुखे मादृशाम्
नोचेद्दुष्कृतमात्मना कृतमिव स्वान्ताद्बहिर्माकृथाः ॥ इति ।

व्याकरणाशुद्धयस्तु एकस्मिन्नेवपद्ये बहूनि सन्ति कण्टकोद्धारे उदाहृतानि । अत्रापि मनागुदाह्रियते यथा—भूमिकोदाहृतकवित्ते वाचां विसृजन्ति अत्रोच्चारणे विसृजतेः प्रयोगः प्रणताः प्रसन्नहृदामिति कर्मणि षष्ठी । मञ्जुनार्थमिथ्यैवाभिमानभरादत्र निर्विभक्ति मञ्जुनाथपदम् । निश्छलप्रतिज्ञावयमित्यादौ सविशेषणे एकस्मिन् वयमिति बहुवचनम् । कियद्गणयामिसर्वैव साहित्यवल्लभीवल्लभस्य

रचना व्याकरणाशुद्धिकलुषिता पूतिगन्धा नाशिकावैमुख्यमिवापादयन्ती उद्वेगकरी एवेत्यलम् विज्ञेषु।

प्रस्तुतस्य राधामाधवविलासस्य क्रियन्ति छन्दांसि सुधियां तोषायोपह्रियन्ते दृष्टिप्रसादेन पश्यन्तु विज्ञाः—यथा

नहि सौरभमधुना मधुरं मधु नहि विकशनमिह काले।
कलिमलिराश्रयते विकशिष्यति किं भविता सखि काले।
हा सखि कपटपटु शयितं परिचुंव्य विलोक्य कपोले
उद्गतरोमततिं विनता समचुम्बिष्ट चारु कपोले॥
आयत-नयन-कोणशर-विलसनभङ्गिभरा इह रामाः।
कति न समा भुवि सन्ति परैव विलोकनकलाभिरामा॥
परिहर कुञ्जभवनमधुना परिसर भवनं सुखमूलम्॥
विकशति कमलकुलं चटकावलिराश्रयते श्रुतिमूलम्।
मुक्तो मुक्तमनांस्यपकर्षति वद्धो वन्धनकारी
वालो वालकुरङ्गनयनि तव वालकालविषधारी।
स्फुरसि वामभुज चेत्क्रमिता मिलिता यदि जीवनमूलम्।
आलिङ्गेयममु परिहृत्य त्वयैव परं सुखमूलम्।
सखि लज्जां परिहाय नयनमविभाव्य सतामुपदशम्
वाजीवाशु विकर्षन्मामनुधावति माधवदेशम्।
कुललज्जाऽभिनवाभिरतिर्विकलाऽनुकुलं व्रजवाला
भ्रामरिकेव भ्रमत्यनिशं विमना विदुषी शशिभाला
शिशुलालनमिषतोऽन्तिकमेत्य छलौ छलयन्नतिमूढाम्
अङ्गुल्याभिमृशन् वक्षो मम मूर्छितवान्नतिमूढाम्
विरहज्वरभरसंवरिता तव हरि—हरिरिति निगदन्ती
माधव तव रसतो ज्वारितोत्थास्यति मन्ये प्रलपन्ती
आलोकयितुमिहेच्छसि वामन विरहदशामदीयाम्
परिहर पदरवमनुसर मानुषपशुगतिमत्र मदीयाम्
कीलितेव माधवहृदये गोपालि दृढं सखि मग्ना।
तव सपत्नजनताहृदयेषु विभासि शल्यमिव लग्ना॥

———

कण्टकोद्धारः कृतः नकमप्याक्षेप्तुम्। अत्र स्वनिबन्धे मयापि मिथ्यारोपित दोषान् परिहरता भट्टभावैवानुसृता। यद्यपि कृते प्रतिकृतं कुर्य्याद्धिंसने प्रतिहिंसनमिति नयमनुसृत्य तथाचरितं तथापि तन्मम दुःखायैवेति सर्वं निवेद्य इदं प्रार्थये यदि कश्चित्सुधीः अत्र तत्त्वबुभुत्सया मीमांसेत तदा तं प्रति मीमांसितुं रसगङ्गाधरदूषणोद्धारान् श्रोतुं च सदा सोत्साहमुत्कोऽस्मि। अस्य कण्टकोद्धारस्यान्ते परिशिष्ट रूपतया जग्गूवेङ्कटाचार्य्यं कृत "मर्मप्रकाश मर्मोद्घाटनस्य, असारताप्रदर्शनमपि कृतं यदन्ते निबद्धम्। अस्यैव श्रीवेङ्कटाचार्य्यनिबद्धस्य ग्रन्थस्य व्याख्यारूपः प्रतिध्वनिरूपो वा नवभट्टनिन्दा निबन्धः नात्र किञ्चिदपूर्वं नागेशगालीप्रदानादन्यदिति। श्रीमान् जग्गूवेङ्कटाचार्य्योऽपि सविनयं निवेद्यते नात्र मयाऽपराद्धम् नागेशस्य जगद्गुरोर्मिथ्याक्षेपान् परिहरता शिष्यकृत्यमेवानुष्ठितमिति क्षाम्यन्तु सन्तो भवन्त इति-बुधसेवी हरिनाथ शर्मा।

शास्त्ररत्नाकरस्यान्तं यातोऽहं यदनुग्रहात्।
तेभ्यो गुरुभ्यः सश्रद्धं निबन्ध सुममर्पये॥



---

हितचिन्तक प्रेस, रामघाट, बनारस।